कविहृदयम् -

# सर्वे संस्कृतभाषिणः स्युः

स्पृष्टं स्त्री-विट-चेट-शूद्र-यवनैः गीर्वाणवाङ्मन्दिरं
भ्रष्टं स्यादिति तालयन्त्रितमिदं कुर्वन्ति, तेभ्यो नमः ।
किं निन्दासु, *किमर्चनेषु, किमु वा शास्त्रेषु, किं प्रेमसु
सर्वे संस्कृतभाषिणो यदि, तदा देवाय कुर्यां बलिम् ।।

- कण्टकार्जुनकविः

कण्टकार्जुनकविः कण्टकाञ्जलिनामके काव्ये वदति - ''सामान्यैः जनैः यदि संस्कृतेन व्यवहारः क्रियेत तर्हि संस्कृतं भ्रष्टं भवेत् इति बुद्ध्या केचन सामान्यान् पाठयितुं न इच्छन्ति। किन्तु निन्दनसन्दर्भे, पूजासन्दर्भे, प्रेमव्यवहारसन्दर्भे इतरत्र चापि यदि संस्कृतेन व्यवहारः स्यात् तर्हि किं नष्टं स्यात् ? न किमपि । अतः यस्मिन् दिने सामान्याः सर्वेऽपि संस्कृतेन सम्भाषणे समर्थाः भवन्ति तस्मिन् दिने अहं देवाय इष्टार्थसिद्धिसूचिकां बलिम् अर्पयिष्यामि'' इति।

'सर्वैः संस्कृतेन सम्भाषणं करणीयम्' इति विषयं सूचकरूपेण निरूपयता कविना कश्चन अपूर्वः सिद्धान्तः प्रतिपादितः। सम्भाषणं भाषायाः जीवातुभूतम्। भाष्यते इति हि भाषा। यया भाषया सम्भाषणं न प्रचलति तस्याः भाषात्वम् एव न सिद्ध्यति। संस्कृतं जीवन्ती भाषा इत्यत्र यदि अस्माकम् आदरः तर्हि अस्माभिः संस्कृतेन सम्भाषणं करणीयम् एव।

कदाचित् वयं चिन्तयेम - 'सम्भाषणसामर्थ्यम् अस्ति। अतः तावता अलम्' इति। किन्तु केवलं सम्भाषणसामर्थ्येन न अलम्, अपि तु सम्भाषणशीलता आवश्यकी। सम्भाषणशीलता अस्ति चेत् अस्मान् दृष्ट्वा अन्ये अपि बहवः प्रेरिताः भवन्ति, सामान्याः जनाः च संस्कृतसम्भाषणं श्रुत्वा संस्कृतस्य व्यावहारिकताम् अवगच्छन्तः सरलताम् अपि अङ्गीकुर्वन्ति। यदि निरन्तरं सम्भाषणं क्रियेत तर्हि अस्मदीया भाषा परिष्कृता भवति । प्रादेशिकभाषा-दुष्प्रभावस्य परिहरणम्, अक्लिष्टमार्गस्य आश्रयणम्, अस्थाने विभक्तिप्रयोगस्य निवारणं, जनिष्यमाणानां दोषाणां परिहारार्थं सामर्थ्यसम्पादनम् इत्यादिकं सम्भाषणशीलताकारणतः एव प्राप्यते।

अतः संस्कृतज्ञाः संस्कृतेन सम्भाषणं कुर्युः, अन्यान् संस्कृतं पाठयेयुः च। 'सामान्याः दोषान् कुर्युः' इति चिन्तयित्वा सामान्यानां पाठने औदासीन्यं न युक्तम्। 'न हि याचकाः सन्तीति शाल्यो नोप्यन्ते' इत्येतत् वाक्यं स्मर्तव्यम् अस्माभिः । भाषापाठनं कृत्वा तैः क्रियमाणानां दोषाणां निवारणार्थम् उपायाः चिन्तनीयाः। एषः एव युक्तः मार्गः।

---

* 'किं मानीषु' इति मूलपाठः।


मस्ती की सवारी,
मस्ती और मज़े के लिए बस कैम्को
भारत के सबसे बड़े-सबसे
यानी मज़ा ही
Campco
Campco
White
Creamy Chocolate
Campco
Creamy Milk Chocolate




कैम्को ने संवारी



चाहिए. मस्त-मज़ेदार-खरी ये चॉकलेट
धुनिक प्लांट की है भेंट. कैम्को,
ज़ा मिले सबको!







है खरी मस्ती!





# चन्दमामा

जून् - १९९४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४.००

वार्षिकं ग्राहकशुल्कं रू. ४८.००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## शैक्षणिकः 'भारः'

मासद्वयात्मकस्य दीर्घस्य ग्रीष्मविरामस्य अनन्तरं विद्यालयानां पुनरारम्भः शैक्षणिकवर्षस्य पुनरारम्भः च सन्निहितः अस्ति। सर्वे बालाः मित्रैः सहपाठिभिः च मेलनार्थम् अवकाशं प्राप्नुवन्तः विद्यालयं प्रति गन्तुं समुत्सुकाः सन्ति।

किन्तु बालानां विद्यालय-गमने विमुखतायै प्रेरयन् अपि कश्चन अंशः अस्ति। स च - प्रतिदिनं बालैः विद्यालयं प्रति नेतव्यानां पुस्तकानां टिप्पणीपुस्तकानां च भारः। शिक्षाविभागस्य विद्यालयस्य च अधिकारिवर्गः ज्ञानव्याजेन पाठ्यक्रमे पुस्तकानां विनियोजने एव समुत्सुकः दृश्यते। अतः सर्वेषां ज्ञानकाण्डानां भारः पाठ्यपुस्तकरूपेण दीयते। तेषां पुस्तकानाम् अध्ययनस्य अनन्तरं ज्ञानाधिकारिभिः शिक्षाविभागीयैः वा काले काले आयोज्यमानासु परीक्षासु वार्षिकपरीक्षासु च बालैः उत्तराणि लेखनीयानि भवन्ति। पाठ्यपुस्तकम् अवगन्तव्यं चेत् अध्यापकैः दीयमानं विवरणं श्रुत्वा तत् टिप्पणीपुस्तके लेखनीयं भवति। एवं पाठ्यपुस्तकानि टिप्पणीपुस्तकानि च बालानां 'भाराय' भवन्ति।

पाठ्यपुस्तकैः टिप्पणीपुस्तकैः च पूर्णं शालास्यूतं वहतः छात्रान् दृष्ट्वा केचन चिन्तकाः भारं वहतां गर्दभानां सादृश्यं छात्रेषु दृष्टवन्तः। एतस्य देशस्य जनानां प्रतिनिधिभूताः केचन संसत्सदस्याः एतां दुष्पद्धतिं खण्डयन्तः आक्रोशनं कृतवन्तः।

एतस्य क्षेत्रस्य वस्तुस्थितिं समस्यां च परिशीलयितुं सर्वकारेण यशपालसमितिः रचिता। एतया समित्या प्रतिपादितं यत् बालानां 'भारः' अवश्यं न्यूनीकरणीयः इति। तथा एतदपि प्रतिपादितं यत् शिशुविहार-प्राथमिकविद्यालययोः प्रवेशसमये क्रियमाणा प्रवेशपरीक्षा गृहपाठभारः चापि न भवेत् इति।

सर्वकारेण एव चाल्यमानेषु केन्द्रीयविद्यालयेषु नवोदयविद्यालयेषु, इतरासु कासुचित् विशिष्टशिक्षणसंस्थासु च पूर्वप्रस्तुतया समित्या प्रतिपादिताः अंशाः एतस्मिन् एव शैक्षणिकवर्षे व्यवहारे आनीयन्ते इति श्रूयते। अन्याभिः शैक्षणिकसंस्थाभिः एतद्विषये किं क्रियते ? प्राथमिक-विद्यालय-बालानां विषये वा समित्या प्रतिपादितान् अंशान् किं ताः व्यवहारे आनयेयुः ?

सम्पुटः - ११ जून - १९९५ सञ्चिका - १

प्रतिकृतिमूल्यं रू. ४.०० * वार्षिकं ग्राहकशुल्कं रू. ४८.००



# नामनिर्वचनम् - १६

*[ निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते । ]*

**कृष्णा -** [कृष (विलेखने) + नक् + णत्वं + टाप्] कृष्णा नाम नदी लोके प्रसिद्धा । या आकर्षति सा कृष्णा इति अर्थः वक्तुं शक्यते ।

पञ्चपाण्डवमहिषी द्रौपदी अपि 'कृष्णा' इति उच्यते । कृष्णवर्णत्वात् एव एतस्याः नाम तथा । तथा हि महाभारते-(१.१६८.४४) 'कृष्णेत्येवाब्रुवन् कृष्णां कृष्णाऽभूत् सा हि वर्णतः' इति । कृष्णशब्दस्य - पिप्पली, द्राक्षा, कृष्णजीरकः, राजसर्षपः इत्यादयः अन्ये बहवः अर्थाः अपि सन्ति एव ।

**कालिन्दी -** कलिन्दे भवा, कलिन्दस्य इयम् इति वा कालिन्दी । [कलिन्द + अण् + ङीप्] कालिन्दी इति यमुनायाः एव अपरं नाम । कलिन्दनामके पर्वते एषा जाता इत्यतः कालिन्दी इति एतस्याः नाम जातम् ।

**कलिन्दः -** कलिं द्यति = द्विधा विभागं करोति इति कलिन्दः । [कलि + दो (अवखण्डने) + खच् + मुमागमः] कलिन्दः कश्चन पर्वतः । यः कलिं = कलिप्रभावं नाशयति सः कलिन्दः इति तात्पर्यं वक्तुं शक्नुमः ।

**दुर्गा -** दुः = दुःखेन गम्यते प्राप्यते असौ इति, दुर्दुःखेन गम्यते अस्याम् इति वा दुर्गा । [दुः + गम्लृ - (गतौ) + डः] दुःखेन गीयते स्तूयते इति वा दुर्गा । [दुः + गै (शब्दे) + अङ्] सर्वजनैः कष्टेन एषा प्राप्यते इत्यतः एषा 'दुर्गा' इति उच्यते । दुर्गायाः माहात्म्यम् एवं वर्ण्यते देवीभागवते -

''दुर्गात् त्रायति भक्तं या सदा दुर्गार्तिनाशिनी ।

दुर्ज्ञेया सर्वदेवानाम् .....'' इति ।

दुर्गा इत्यस्य सस्यविशेषः इत्यपि अर्थः अस्ति । नववर्षा कुमारी दुर्गा इति उच्यते । ('नववर्षा भवेद् दुर्गा सुभद्रा दशवार्षिकी' - देवीभागवतम् ।)

---

*सूचना - भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

सङ्केतः - संस्कृतचन्दमामा 'अक्षरम्' ८ उपमार्गः, II पट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५

वार्ताविशेषः -

# कृषिकाणां कष्टम् अवगतं सर्वकारेण




यस्मिन् दिने प्रपञ्चस्य जनाः नूतनवर्षं निमित्तीकृत्य परस्परं शुभाशंसनं कुर्वन्तः आसन् तस्मिन् दिने मेक्सिकोदेशस्य जनाः शासनं विरुध्य घोरं युद्धम् आरब्धवन्तः । प्राज्ञाः वदन्ति यत् गत-विंशति-वर्षेषु प्रवृत्तेषु युद्धेषु एतत् एव अधिकहिंसात्मकम् आसीत् इति ।

''वयम् अनन्यगतिकाः स्मः । वासार्थं गृहं नास्ति । अणुमात्रम् अपि अस्मदीया भूमिः नास्ति । उद्योगावकाशः अपि नास्ति । पठनार्थं व्यवस्था नास्ति । चिकित्सार्थम् औषधं न उपलभ्यते । एवम् अस्माकं न सुखं, न शान्तिः, न निद्रा, न तृप्तिः । शासनं विरुध्य युद्धं विना अस्माकम् अन्या गतिः नास्ति एव । एतत् निर्णायकं युद्धम्'' इति वदति गोरिल्लायुद्ध-व्यवस्थायाः नायकः कमाण्डेट् मार्गोस् । १९१० तमे वर्षे प्रवृत्तस्य शासन-विरोधस्य नायकः यः आसीत् एमिलियन् जपाटावर्यः ततः प्रेरणां प्राप्य 'जपाटिस्टा नेषनल् लिबरल् आर्मी' नामिकां सेनां स्थापयिष्यामि इति वदति कमाण्डेण्ट् मार्गोसावर्यः ।

दक्षिणमेक्सिकोप्रदेशे चियपास्प्रदेशः अस्ति । अत्र निर्धनाः कृषिकाः एव अधिकतया निवसन्ति । विकासहीनः प्रदेशः एषः । 'इन्स्टिट्यूषनल् रेवल्यूषनरी पार्टी' नामिकया कृतस्य निरङ्कुशशासनस्य कारणतः तत्रत्याः जनाः महत् कष्टम् अनुभूतवन्तः । शासनं तु धनिकानां विशालकृषिभूमियुतानां कृषिकाणां मैत्रीम् अकरोत् । एते धनिकाः कृषिकाः अरण्यक्षेत्राणि स्वायत्तीकृतवन्तः । कृषिकाः धान्यानां योग्यं मूल्यं प्राप्तुं न शक्तवन्तः । ये विरोधम् आचरितवन्तः तेषां हननं कारितवन्तः एते धनिकाः । यदा

धनाशा प्रवृद्धा तदा ते असङ्ख्यानां कृषिकाणां भूमिं बलात् स्वायत्तीकृतवन्तः । एतस्य विरोधं ये कृतवन्तः तान् सर्वान् कारागारे स्थापयन्तः भ्रष्टाः अधिकारिणः धनिकानां साहाय्यम् आचरितवन्तः । एवं निर्धनानां कृषिकाणां स्थितिः नितरां शोचनीया जाता । शासनविरोधात् ऋते तेषाम् अन्यः मार्गः न आसीत् एव ।

एतन्मध्ये जनवरीमासस्य प्रथमे दिनाङ्के अमेरिका-कैनडा-मेक्सिको-देशानां मध्ये 'नाफ्टा' (नार्त् अमेरिकन् फ्री ट्रेड् अग्रिमेण्ट्) नामकः सन्धिः व्यवहारे आगतः । एषः सन्धिः व्यवहारे आगतः चेत् अमेरिकादेशे स्थितानि निम्नगुणस्तरीयाणि वस्तूनि, आहारधान्यानि च अस्मद्देशम् आगमिष्यन्ति' इति जानन्तः कृषिकाः भीताः जाताः । शासनविरोधः करणीयः इति भावना तेषु तीव्रा जाता ।

सामान्यतः द्विसहस्राधिकाः कूटयुद्धनिरताः सैनिकाः सान्क्रिस्टबाल्, डेलास् कासस्, ओकासिङ्गो, मार्गरिटास्, अल्टामारिनो इत्यादीनि पर्वतप्रदेशीयानि नगराणि दिनत्रयाभ्यन्तरे स्वायत्तीकृतवन्तः । त्रिशतं कूटयुद्धनिरताः क्रिस्टबाल्-नगरसभाकार्यालयम् आक्रम्य तत्रत्यानि कम्प्यूटर्यन्त्राणि, उत्पीठिकासन्दादीनि सञ्चिकाः च नाशितवन्तः । अन्येषु केषुचित् स्थलेषु अपि सर्वकारीयकार्यालयाः तैः नाशिताः । कारागारे स्थिताः १८० कूटयुद्धनिरताः तैः विमोचिताः ।

एतेन नितरां क्रुद्धः मेक्सिकोसर्वकारः युगपत् एव भूमार्गेण आकाशमार्गेण च आक्रमणं कृत्वा सप्ताहाभ्यन्तरे तान् कूटयुद्धनिरतान् अरण्यं प्रति अप्रेषयत् । एतस्मिन् युद्धे द्विशताधिकाः कूटयुद्धनिरताः मरणं प्राप्तवन्तः । कूटयुद्धनिरतानां कृषिकाणाम् आक्रमणात् भीताः सहस्रशः जनाः नगरं परित्यज्य पलायनं कृतवन्तः ।

'एतस्य शासनविरोधस्य कारणं तु रोमन् कैथोलिक् बिषप् साम्यूल् रूमीस् एव' इति शासनम् अघोषयत् । किन्तु बिषप्वर्यः एतम् आरोपं निराकृतवान् । किन्तु तेन कठोरम् उक्तं यत् कृषिकाणां विषये शासनेन आश्रिता धारणा अवश्यं परिवर्तनीया इति । 'जनाः देशे वासं कर्तुम् एव यथा न शक्नुयुः तथा कर्तुं सर्वकारस्य अधिकारः सर्वथा नास्ति' इति सः प्रतिपादितवान् ।

सप्ततिवर्षेभ्यः शासनकार्ये निरतेन शासनपक्षेण अवगतं यत् कृषिकाणां समस्यायाः विषये औदासीन्यं प्रदर्शयितुं न शक्यते इति । अतः सः कूटयुद्धनिरतानां निग्रहस्य प्रयत्नम् अत्यजत् । 'जपाटिस्टा आर्मी' काचित् अधिकृता राजकीयशक्तिः इति शासनेन अङ्गीकृतम् । तेन पक्षेण सह वार्तालापः अपि तेन अङ्गीकृतः । अग्रिमे अगस्त्मासे मैक्सिकोदेशे निर्वाचनं प्रचलिष्यति । तत्र बहुमुखस्पर्धा प्रचलेत् इति राजकीयक्षेत्रज्ञाः अभिप्रायं प्रकटयन्ति ।

**मेक्सिको-सम्बद्धाः केचन चारित्रिकविशेषाः -**

* एतस्मिन् देशे स्पानिश्भाषाभाषिणः एव अधिकसङ्ख्यया सन्ति ।
* १६ शतकान्तं यावत् माया-इण्डियन् राज्यानि तत्र आसन् ।
* १५२० अनन्तरं १८२० वर्षान्तं यावत् तत्र स्पेन्देशस्य शासनम् आसीत् ।
* १८२१ तमे वर्षे एषः देशः स्वतन्त्रः जातः ।
* १८४८ तमे वर्षे माया-इण्डियन् जनैः कृतः शासनविरोधः समर्थतया निगृहीतः ।
* १९१० तमे वर्षे जपाटा-नायकत्वे कृषिकैः शासनविरोधः कृतः ।
* १९१७ तमे वर्षे नूतनस्य संविधानस्य (शासनक्रमस्य) अङ्गीकारः ।
* १९२० तमे वर्षे 'इन्स्टिट्यूषनल् रेवल्यूषनरी पार्टी' शासनाधिकारं प्राप्नोत् ।



# नाम्नां विक्रयणम्

वारिजपुरस्य साप्ताहिकवाणिज्यस्थले कश्चन वृद्धः एकत्र उपविश्य – "नाम्नां विक्रयणं करोमि । स्वीकुर्वन्तु । अमूल्यानि नामानि ..." इति एवम् उच्चैः वदन् जनानाम् अवधानम् आकष्टुं प्रयतमानः आसीत् ।

तस्य वृद्धस्य नाम वीरभद्रः इति । तस्य गृहे व्याधिग्रस्ता पत्नी, विवाहयोग्या पुत्री च स्तः । सः तारुण्ये राज्ञः सैन्ये आसीत् । कस्मिंश्चित् युद्धे तदीयः पादः कर्तितः आसीत् । राजा एतादृशानां विषये अवधानम् एव न ददाति स्म । अतः वीरभद्रस्य जीवनं शोचनीयतां गतम् आसीत् ।

साप्ताहिकवाणिज्यस्थलम् आगताः बहवः वीरभद्रस्य नामविक्रयणप्रयत्नं दृष्ट्वा 'एषः कश्चन उन्मत्तः' इति भावयन्तः तस्मिन् अनासक्तिं प्रदर्शयन्तः अग्रे गतवन्तः । किन्तु चौर्यार्थम् अवकाशं प्रतीक्षमाणः कालीशः एतद्विषये आसक्तिं प्राप्य वीरभद्रसमीपम् आगत्य पृष्टवान् – "अये वृद्ध ! लोके तादृशाः अपि अविवेकिनः सन्ति वा, ये च धनं दत्त्वा भवतः नामानि प्राप्नुयुः ?" इति ।

"अथ किम् ? सामान्यानि नामानि न क्रीणीयुः जनाः । किन्तु मया विक्रीयमाणानि तु अत्यमूल्यानि, लक्षाधिकरूप्यकमूल्यानि च । एतेषां नाम्नां महत्त्वं ये जानन्ति ते अवश्यं क्रीणीयुः एव" इति उक्तवान् वीरभद्रः ।

"एवं तर्हि भवता विक्रीयमाणानां नाम्नां वैशिष्ट्यं वर्णयतु तावत्" इति उक्तवान् कालीशः ।

"तत् कथं शक्येत ? प्रतिनाम यदि पञ्चविंशतिसहस्रं रूप्यकाणि दीयेरन् तर्हि तेषां वैशिष्ट्यं वर्णयेयम्" इति उक्तवान् वीरभद्रः ।

तदा कालीशः हसन् उक्तवान् – "भवता उच्यमानानां नाम्नां वैशिष्ट्यम् अज्ञात्वा को वा

''श्रीमाता''



तावत् धनं दद्यात् ? अतः प्रथमम् एकस्य नाम्नः वैशिष्ट्यं मां वदतु । ततः लाभः मया प्राप्तः चेत् अग्रिमसप्ताहे मया प्राप्तस्य अर्ध-भागं भवते दास्यामि" इति ।

वीरभद्रः क्षणकालं कालीशं परिशोधदृष्ट्या दृष्ट्वा – "भवति विश्वस्य एकस्य नाम्नः वैशिष्ट्यं वदामि । यदि वचनानुगुणं भवान् मह्यं धनं दद्यात् तर्हि अपरं नाम अपि भवते एव ददामि" इति उक्त्वा नाम्नः वैशिष्ट्यं वर्णितवान् – "केभ्यश्चित् वर्षेभ्यः पूर्वं वारिजपुरस्य समीपे स्थिते अरण्ये कश्चन व्याघ्रः निवसति स्म । सः अकस्मात् ग्रामं प्रविश्य धेनूः जनान् च मारयति स्म । तस्य मारणार्थं राज्ञा कृताः सर्वे प्रयत्नाः विफलाः । अन्ते राजा घोषितवान् यत् यः व्याघ्रं मारयति तस्मै लक्षं रूप्यकाणि दीयन्ते इति । एतदनन्तरं ग्रामसीमायां तस्य व्याघ्रस्य कलेवरं प्राप्तम् । किन्तु तस्य मारयिता कः इति तु केनापि न ज्ञातम् । राजा एतं विषयं ज्ञातुं गुप्तचरान् नियोजितवान् । ततः वार्ता ज्ञाता यत् चक्रधरः नाम कश्चित् तं व्याघ्रं मारितवान् इति । किन्तु चक्रधरः तु न दृष्टः । यदि भवान् वेषपरिवर्तनं कृत्वा आत्मानं चक्रधरं वदन् राजानं पश्येत् तर्हि भवता एव पारितोषिकं प्राप्येत" इति ।

कालीशः तस्मिन् एव दिने वेषपरिवर्तनं कृत्वा राजानं दृष्ट्वा – 'अहं चक्रधरः । मया एव व्याघ्रः मारितः' इति उक्तवान् ।

एतत् श्रुत्वा राजा सन्देहेन पृष्टवान् – "पारितोषिकप्राप्त्यर्थं किमर्थम् एतावता विलम्बेन आगमनं भवतः ? धनात् जुगुप्सते वा भवान् ?" इति ।

"नैव प्रभो ! वृद्धाभ्यां मातापितृभ्यां सह तीर्थयात्रार्थं गतवान् आसम् । अतः एव अत्र आगमने विलम्बः जातः" इति विनयेन उक्तवान् कालीशः ।

राजा कालीशं सत्कृत्य लक्षं रूप्यकाणि तस्मै दत्तवान् । किन्तु कालीशः वीरभद्राय किमपि न दत्तवान् । प्रत्युत अपरं नाम वीरभद्रात् प्राप्तुं योजनां कृतवान् सः ।

सः अपरस्मिन् दिने वीरभद्रं दृष्ट्वा उक्तवान् – "भोः, भवतः वचनं सत्यम् एव । तत् द्वितीयं नाम अपि वदतु । यावत् प्राप्यते तत्र विभागं कृत्वा स्वीकरवाव" इति ।

"यदि भवान् धनं दत्तवान् स्यात् तर्हि अहं मम मातुः चिकित्सां, पुत्र्याः विवाहं च कारयेयम् । भवता तु किमपि न दत्तम् एव । एवं चेत् मम पुत्र्याः विवाहः गगनकुसुमायेत" इति उक्तवान् वीरभद्रः ।

"भोः, भवतः पुत्री मम पुत्री इव । तस्याः विवाहार्थम् अहं साहाय्यं करोमि एव" इति उक्तवान् कालेशः ।

तदा वीरभद्रः उक्तवान् – "पूर्वं-त्रात्राम त्रिशताधिकवर्षेभ्यः पूर्वं-हिमालयतः महापात्रः नाम कश्चन मुनिः आगत्य एतस्य देशस्य राजानं दृष्ट्वा – 'भवतः राज्ये प्रजाः त्रिशतं वर्षाणि यावत् सुखेन स्थास्यन्ति' इति, तृतीयशतकस्य अन्ते अहं पुनः आगत्य भवद्राज्यस्य राजानं द्रक्ष्यामि' इति च उक्त्वा गतवान् । अस्माकं महाराजः चिन्तयति यत् तस्य मुनेः आशीर्वादतः एव राज्यं सुभिक्षम् अस्ति इति, मम जीवितकाले एव तं मुनिं द्रक्ष्यामि इति च । अतः भवान् महापात्रोचितेन वेषेण गत्वा महाराजं पश्यति चेत् प्रभूतं धनं प्राप्स्यति" इति ।

ततः कालीशः वृद्धमुनिवेषं धृत्वा रुद्राक्षमालादिकं चापि धृत्वा महाराजं दृष्ट्वा – "हिमालयात् आगतः महापात्रः अहम्" इति उक्तवान् ।

राजा तम् आदरेण सत्कृत्य सप्ताहं यावत् राज्ये उत्सवं कारितवान् । तस्मै अमूल्यानि उपायनानि दत्त्वा प्रेषितवान् च ।

एवं प्राप्तेन धनेन गृहं क्रीत्वा सुखेन वासम् आरब्धवान् कालीशः । वीरभद्राय धनदानं सर्वथा विस्मृतवान् सः ।

एवम् एव पुनः कानिचन दिनानि





अतीतानि । कदाचित् कालीशस्य मनसि इच्छा उत्पन्ना यत् वीरभद्रः कथम् अस्ति इति द्रष्टव्यम् इति । अतः सः पुनरपि साप्ताहिकवाणिज्यस्थलं गतवान् ।

वीरभद्रः दूरात् एव कालीशं दृष्टवान् । तथापि तम् अपश्यन् इव - "नामानि क्रीणन्तु ... । भो जनाः, नामानि क्रीणन्तु । अपूर्वाणि नामानि ..." इति उच्चैः उद्घोषणम् आरब्धवान् ।

तदा कालीशः तस्य समीपं गत्वा - "अये वञ्चकाधम । पूर्वं भवान् माम् उक्तवान् आसीत् यत् मत्समीपे नामद्वयम् अस्ति इति । इदानीं तु पुनरपि नामविक्रयणं प्रचलति । मां वञ्चितवान् भवान्" इति उक्तवान् ।

एतत् श्रुत्वा वीरभद्रः हसन् - "भवता यादृशं वचनं कृतं तादृशं तु न कृतं मया" इति उक्तवान् ।

"भोः । अलं प्रवृत्तविषये वार्तालापेन । इदानीम् अन्यत् नाम वदतु । एतत्सन्दर्भे वञ्चना सर्वथा न क्रियते मया" इति उक्तवान् कालीशः ।

"भवते नामानि न ददामि, यतः अहं न मूर्खः" इति कोपमिश्रितेन स्वरेण उक्तवान् वीरभद्रः ।

"भोः, अलं कोपेन । अहं वञ्चयेयम् इति खलु भीतिः ? अतः एवं भवतु । भवान् नाम वदतु । अनन्तरं मया सह आगत्य भवान् एव महाराजेन दीयमानं पारितोषिकं प्राप्नोतु" इति उक्तवान् कालीशः ।

वीरभद्रः एतत् अङ्गीकृत्य - "अस्तु तावत् । भवान् महाराजसमीपं गत्वा 'अहं बलभद्रः' इति वदतु । वेषपरिवर्तनस्य तु काऽपि अपेक्षा नास्ति । महाराजः बलभद्रस्य नाम श्रुतवान्, किन्तु तं कदापि न दृष्टवान् । तस्य नाम्नः श्रवणात् एव राज्ञः महती भीतिः । अतः सः भवतः स्नेहम् इच्छन् भवते बहु-विधानि उपायनानि ददाति" इति बोधितवान् ।

ततः गतः कालीशः राजसभां प्रविश्य - "राजन् । अहम् अस्मि महापराक्रमशाली बलभद्रः" इति उक्तवान् ।

राजा क्षणकालं स्तब्धः । सः पार्श्वस्थं मन्त्रिणं मन्दस्वरेण पृष्टवान् - "अस्माकं युद्धतन्त्राणि सैन्यबलं च शत्रुराजं

निवेदितवान् इत्यतः बलभद्रः अस्माभिः राज्यात् बहिष्कृतः खलु ? एवं स्थिते एषः इदानीं कथं धैर्येण अस्मत्पुरतः उपस्थितः ?" इति ।

मन्त्री कालीशम् आपादमस्तकं परीक्षादृष्ट्या दृष्ट्वा – "महाराज ! एषः बलभद्रः न । सः भवता न दृष्टः स्यात् । किन्तु सः मया तु दृष्टः एव । अस्माकं देशं प्रवेष्टुं प्रयत्नं कृतवन्तं तम् अस्माकं सीमारक्षकाः सैनिकाः मारितवन्तः सन्ति अपि । एषः कश्चन वञ्चकः" इति महाराजम् उक्त्वा कालीशं पश्यन् क्रोधेन – "अये ! कस्यचित् अपराधस्य निमित्तं कारागारवासम् अनुभूय सद्यः ततः विमोचनं प्राप्तवान् कालीशः खलु भवान् ?" इति पृष्टवान् ।

मन्त्रिणा तर्जनपूर्वकं पृष्टात् प्रश्नात् भीतः कालीशः कम्पमानः – "क्षाम्यतु महाप्रभो ! पङ्गुः वृद्धः माम् अत्र प्रेषितवान्" इति उक्तवान् ।

"कः सः पङ्गुः वृद्धः ? यः महाराजं वञ्चयितुं प्रवर्तते सः कठोरं दण्ड्यते इति न जानाति वा सः ?" इति पृष्टवान् मन्त्री ।

तदा सभायाः कोणे स्थितः वीरभद्रः दण्डसाहाय्येन अग्रे आगत्य – "महाप्रभो, भवतः पादसेवकः अहम् । पूर्वं भवतः सैन्ये आसम् । युद्धे पादच्छेदं प्राप्य इदानीं दयनीयाम् अवस्थां प्राप्तवान् अस्मि" इति उक्त्वा स्वस्य कुटुम्बस्य दीनस्थितिं निवेद्य पुनः उक्तवान् – "भवद्दर्शनं प्राप्तुं बहुधा प्रयत्नं कृत्वा असफलः सन् अनन्योपायः अहं एतं कालीशं चक्रधररूपेण महापात्ररूपेण च भवत्समीपं प्रेषितवान् । सन्दर्भद्वये अपि भवता वञ्चना न ज्ञाता एव । सः माम् अपि वञ्चितवान् । अन्ते अहं बलभद्रनाम्ना तं भवत्समीपं प्रेषितवान् । मया यथा चिन्तितं तथा एतस्य वञ्चना भवता ज्ञाता, मया न भवद्दर्शनं प्राप्तम्" इति ।

वीरभद्रस्य कथनात् राज्ञा ज्ञातं यत् स्वदेशे अङ्गवैकल्यं प्राप्तवन्तः सैनिकाः बहवः सन्ति इति । अङ्गवैकल्यं प्राप्तवतां सैनिकानां निमित्तं राजा तस्मिन् एव दिने गौरवधनं व्यवस्थापितवान् ।

राजानं द्विवारं वञ्चितवान् कालीशः पञ्चदशवर्षात्मकं कारागारवासं प्राप्तवान् ।



# विश्वासार्हः

रामभद्रः कश्चन कृषिकः । धेनुचारणार्थं सः कञ्चन कर्मकरम् इच्छति स्म । अतः सः योग्यस्य कर्मकरस्य प्राप्त्यर्थं प्रयत्नं कुर्वन् आसीत् । कदाचित् सत्यमूर्तिः नाम कश्चन युवकः आगत्य उक्तवान् - "किमपि कार्यं ददातु श्रीमन् ।" इति ।

"भवान् प्रामाणिकः श्रमशीलः च यदि स्यात् तर्हि भवते गोचारणकार्यं ददाम् । पूर्वं कश्चन कर्मकरः एतत् कार्यं करोति स्म । किन्तु वञ्चकः सः चारणार्थं धेनूः अरण्यं नीत्वा एकां पार्श्वग्रामे कुत्रचित् विक्रीय माम् उक्तवान् यत् एका धेनुः व्याघ्रेण बलात् नीता इति । अस्मद्ग्रामपरिसरे कुत्रापि व्याघ्रः नास्ति एव । एतत् जानन् सः असत्यम् उक्तवान् । अतः तं कार्यात् निष्कासितवान् अहम्" इति उक्त्वा प्रश्नार्थकदृष्ट्या सत्यमूर्तिं दृष्टवान् ।

"अहं तादृशः न श्रीमन् । वञ्चनाम् अहं नाम्ना अपि न जानामि" इति उक्तवान् सत्यमूर्तिः ।

एतत् श्रुत्वा रामभद्रः मन्दहासं प्रकटयन् - "अस्तु तावत् । प्रातः मया धेनवः अरण्यं प्रापिताः । अतः भवान् अरण्यं गत्वा ताः आनयतु । अनन्तरम् उद्योगदानविषये चिन्तयिष्यामि" इति उक्तवान् ।

सत्यमूर्तिः अरण्यं गतवान् । सायङ्कालसमये धेनुभिः सह प्रत्यागत्य रामभद्रं दृष्ट्वा उक्तवान् - "श्रीमन् ! सर्वाः धेनवः प्रत्यानीताः मया । किन्तु एका कृष्णवर्णीया धेनुः धेनुवृन्दे न तिष्ठति स्म । प्रत्यागमनम् अनिच्छन्ती सा धेनुः मां नितराम् अपीडयत्" इति ।

रामभद्रस्य धेनुगणे काऽपि कृष्णवर्णीया धेनुः न आसीत् एव । अतः रामभद्रः आश्चर्यम् अनुभवन् गृहात् बहिः आगत्य दृष्टवान् । सत्यमूर्तिना प्रदर्शिता तु न धेनुः, अपि तु सः महिषः । सत्यमूर्तेः अज्ञानं दृष्ट्वा मनसि एव हसितवान् रामभद्रः ।

'सत्यमूर्तिः यद्यपि महिषस्य धेन्वाः च भेदं न जानाति, तथापि विश्वासार्हः, श्रमशीलः चापि अस्ति' इति निश्चित्य रामभद्रः सत्यमूर्तिम् उद्योगे नियोजितवान् ।





# विचित्रं पुष्पम्

## १२

(राक्षसमृगम् अन्वेष्टुं प्रस्थितस्य उत्तुङ्गस्य साहाय्यार्थम् आगतः दलनायकः नागसिंहः उत्तुङ्गं समुद्रे पातितवान् । नागपुरीं प्रत्यागतः उत्तुङ्गः राजानं प्रवृत्तं समग्रं निवेदितवान् । राजा सेनाधिपतिना सैनिकैः च सह समुद्रतीरम् उद्दिश्य प्रस्थितवान् । नौकयोः रक्षणार्थम् प्रयत्नं कुर्वन् राक्षसमृगः उत्तुङ्गादिभिः दृष्टः । उत्तुङ्गस्य आदेशस्य अनुगुणं सैनिकाः पञ्जिकाः बाणवत् प्रयुक्तवन्तः । राक्षसमृगः अग्निना दह्यमानः समुद्रजले अपतत् । राजा राजधानीं प्रतिगतवान् । तदनन्तरम् .....)

शिलानाम् उपरि स्थितः उत्तुङ्गः त्रिभिः सैनिकैः सह अधः आगतवान् । तत्रत्यैः अन्यैः सैनिकैः सह सः समुद्रतीरं प्राप्तवान् । सैनिकानां हस्तेषु पञ्जिकाः आसन् । बहुकालं यावत् ते तत्र स्थित्वा प्रतीक्षां कृतवन्तः । किन्तु कोऽपि समुद्रात् न आगतः ।

रात्रेः अन्तिमे यामे कष्टेन तरन् आगच्छन् कश्चन सैनिकः उत्तुङ्गेन दृष्टः । सः झटिति अग्रे गत्वा हस्तसाहाय्येन तं तीरम् आनीय कटौ गृहीत्वा अग्रे नयन् एकत्र उपवेशितवान् । नितरां श्रान्तः सः सैनिकः मूर्च्छावस्थां गतः इव आसीत् । तस्य शरीरे उष्णता अपि न्यूना आसीत् ।

उत्तुङ्गः स्वहस्तेन भटस्य हस्तौ पादौ च घर्षयन् तस्य शरीरे उष्णताम् उत्पादितवान् । ततः किञ्चित्कालानन्तरम्



उत्तुङ्गस्य उपचारेण सचेतनतां प्राप्तवान् सः भटः कम्पमानस्वरेण पृष्टवान् – "राक्षसमृगः आगतः वा ?" इति।

उत्तुङ्गः निराकरणपूर्वकं शिरः चालितवान्। तदा सः भटः उक्तवान् – "हाँ स्मृतम्। सः राक्षसमृगः अत्र आगन्तुं न अर्हति। समुद्रे सः दग्धः अभवत्। दलनायकः अपि मरणं प्राप्तवान्। 'राक्षसमृगं तीरं प्रापयितुं यदि साहाय्यं न क्रियते तर्हि भवन्तः सजीवं स्थातुं न अर्हन्ति' इति अस्मान् वदन् भयं जनयन् आसीत् सः दुष्टः। अन्ते सः स्वयम् एव प्राणैः वियुक्तः अभवत्। 'यदि अहं राजा स्यां तर्हि भवद्भ्यः सर्वेभ्यः अमूल्यानि उपायनानि दास्यामि' इति वदन् भटेषु लोभं जनयन् आसीत् सः। यदा राक्षसमृगः समुद्रमध्यात् उत्थितवान् तदा वयं सर्वे नितरां भीताः। दलनायकः तस्य राक्षसमृगस्य पुरतः पुष्पगुच्छम् एकम् अपातयत्। तस्य प्राप्त्या अपि तृप्तिम् अप्राप्नुवन् सः राक्षसमृगः नौकां ग्रहीतुम् आगतवान्। तावता पक्षिकानां प्रहारः आरब्धः।

क्षणकाले जले निमग्नः राक्षसमृगः अल्पे एव काले महता क्रोधेन उद्गत्य नौकाः अधोमुखं पातयित्वा शताब्दिकापुष्पाणां सङ्कुले मग्नः अभवत्। किन्तु पक्षिकानां प्रहारः निरन्तरम् अनुवृत्तः इत्यतः शिरसि इतरत्र च अग्निस्पर्शं प्राप्य दह्यमानः एव सः जले निमग्नः अभवत्। जले पतितानाम् अन्येषां भटानां का गतिः इति मया न ज्ञायते। अहं तु महता कष्टेन तरन् अत्र आगतवान्" इति।

"एवं प्रवृत्तं स्यात् इति मया यत् ऊहितं तथैव सर्वं प्रवृत्तम् अस्ति" इति उक्तवान् उत्तुङ्गः।

"सः दुष्टः दलनायकः भवन्तं समुद्रे पातयित्वा अस्मत्समीपम् आगत्य – 'राक्षसमृगं मदनुकूलं कृत्वा अहम् एव नागपुर्याः राजा भविष्यामि' इति गर्वेण वदन् आसीत्। अत्याशायाः योग्यं फलं प्राप्तं तेन" इति उक्तवान् भटः।

"अस्तु तावत्। तस्य दुष्टतायाः अनुगुणं योग्यं फलं प्राप्तवान् सः। सर्वं दैवाधीनम्। प्रकृतम् अनुसराम तावत्। इदानीं वयं सेनापतिसमीपं गत्वा प्रवृत्तं समग्रं

निवेदयाम" इति उक्तवान् उत्तुङ्गः ।

"तथैव भवतु । अहम् इदानीं चलितुं सामर्थ्यं प्राप्तवान् अस्मि । अतः गच्छाम तावत्" इति उक्त्वा उत्थितवान् सः भटः ।

स च सूर्योदयसमयः । ते समुद्रतीरे यावत् किञ्चिद्दूरं गतवन्तः तावता कश्चन शवः तैः दृष्टः । स च शवः अग्निना तत्र तत्र दग्धः सन् नितरां विकृतिं प्राप्तवान् आसीत् । तं शवं परिशील्य दृष्टवान् उत्तुङ्गः - "एषः मृतस्य तस्य राक्षसमृगस्य एव शवः । उभौ भटौ एतस्य रक्षणार्थम् अत्रैव तिष्ठताम् । अहं राजधानीं गत्वा एतं विषयं निवेदयिष्यामि" इति उक्त्वा उभौ भटौ शवरक्षणे नियोज्य अग्रे गतवान् ।



राजधानीं प्राप्य सः यदा सेनापतिगृहं गतवान् तदा तत्र कौभवः अपि आसीत् । उत्तुङ्गं दृष्ट्वा सेनापतिः पृष्टवान् - "भटेषु कोऽपि सजीवम् आगतवान् वा ? दलनायकस्य का गतिः जाता ?" इति ।

"दलनायकः परलोकं गतवान् । एषः भटः प्रवृत्तं समग्रं निवेदयिष्यति" इति वदन् उत्तुङ्गः भटं प्रदर्शितवान् ।

भटमुखात् सर्वं श्रुत्वा सेनाधिपतिः - "एवं तर्हि दलनायकः नागसिंहः परलोकं श्रितवान् इत्यत्र नास्ति सन्देहः । यद्यपि सः दुष्टः आसीत्, तथापि तस्य मरणवार्ता राजकुटुम्बीयानां खेदाय भवेत्, यतः सः राजबन्धुः आसीत्" इति उक्तवान् । ततः ते सर्वे राजसमीपं गतवन्तः ।

उत्तुङ्गेन भटेन च यद्यत् उक्तं तत्सर्वं महाराजं निवेदितवान् सेनाधिपतिः । राजा सर्वं श्रुत्वा उत्तुङ्गम् अभिमानेन पश्यन्- "भवता न केवलं माणिक्यपुरी, अपि तु अस्मद्राज्यम् अपि रक्षितम् । भवतः साहसं श्लाघार्हम् । भवतः धैर्यं सर्वोत्कृष्टम् उदाहरणम् । यदि भवतः अङ्गीकारः स्यात् तर्हि अहं भवन्तं दलनायकपदे नियोजयेयम् । किं वदति भवान् एतद्विषये ?" इति पृष्टवान् ।

तदा सेनाधिपतिः उक्तवान् - "उत्तमा योजना एषा महाप्रभो । यदि उत्तुङ्गः अस्माकं सैन्ये पदं प्राप्नुयात् तर्हि पर्वतकुलीयाः बहवः युवकाः अपि सैन्यं प्रविशेयुः, ये च अद्यावधि सैन्यप्रवेशे अनुत्सुकाः आसन्" इति ।

"उत्तुङ्गः यदि दलनायकः भवेत् तर्हि



अस्मत्कुलीयानाम् अपि नायकः सः एव भविष्यति" इति आनन्देन उक्तवान् कौभवः।

उत्तुङ्कः क्षणकालस्य मौनस्य अनन्तरम् - "मद्विषये भवद्भिः यः अभिमानः प्रदर्श्यते तदर्थम् अहं नितरां कृतज्ञः अस्मि। किन्तु भवताम् अपेक्षां पूरयितुम् अशक्तः अस्मि। अहं किमर्थं माणिक्यपुरीतः प्रस्थितवान् इति तु भवन्तः जानन्ति एव। तत्रत्याः मम आगमनं प्रतीक्षमाणाः सन्ति। अतः अविलम्बेन प्रतिगमनार्थम् अनुज्ञा दातव्या" इति विनयेन प्रार्थितवान्।

राजा उत्तुङ्कस्य हस्तौ गृहीत्वा - "साधु उत्तुङ्क, साधु। मातृभूमौ प्रीतिः युक्ता एव। अतः भवन्तं निर्बन्धुं न इच्छामि। किन्तु प्रतिगमनम् अद्य मास्तु। श्वः सकलराजगौरवेण भवतः प्रेषणार्थं व्यवस्थां कारयिष्यामि" इति उक्तवान्।

उत्तुङ्कः एतत् अङ्गीकृतवान्। तदा कौभवः राजानम् उक्तवान् - "प्रभो, यदि भवतः अनुज्ञा स्यात् तर्हि एनम् अद्य अस्माकं वसतिप्रदेशं नीत्वा प्रत्यानेष्यामि" इति।

"अस्तु तावत्। श्वः प्रातःकालाभ्यन्तरे भवद्भ्याम् अत्र उपस्थातव्यम्" इति उक्तवान् राजा।

"यथाज्ञापयति प्रभुः" इति उक्त्वा कौभवः उत्तुङ्केन सह स्ववसतिं गतवान्।

तत्र सर्वे उत्तुङ्कस्य आगमनम् एव प्रतीक्षमाणाः आसन्। उत्तुङ्कं दृष्ट्वा सर्वे सन्तोषेण करताडनं कृतवन्तः। केचन आनन्दातिरेकेण नृत्यं कृतवन्तः। कौभवः तान् उत्तुङ्कस्य अग्रिमप्रयाणवार्ताम् उक्त्वा उत्तुङ्कं स्वगृहं नीतवान्। कौभवस्य पत्नी भूरिभोजनं सज्जीकृतवती। सर्वे सन्तोषेण भोजनं कृतवन्तः।

तस्यां रात्रौ उत्तुङ्कः तत्रैव शयनं कृतवान्। अनन्तरदिने प्रातः यदा उत्थितः तदा सस्यानि जलेन सिञ्चन्ती चित्रा तेन दृष्टा। 'मया दत्तं शताब्दिकापुष्पसस्यम् एव एतत्' इति अभिजानन् उत्तुङ्कः मन्दहासपूर्वकं चित्रायाः समीपं गतवान्।

उत्तुङ्कं दृष्ट्वा चित्रा अभिनयेन पृष्टवती - "भवता माणिक्यपुरी गन्तव्या एव वा ?" इति।

"आम्। यतः तत्रत्याः सर्वे माम् एव

प्रतीक्षमाणाः भवन्ति'' इति अभिनयपूर्वकम् एव उक्तवान् उत्तुङ्गः ।

''ततः प्रत्यागत्य अस्माकं सैन्ये दलनायकपदवीम् अलङ्कर्तुं शक्यं खलु ?'' इति पुनः अपि अभिनयेन एव उत्तुङ्गं पृष्टवती चित्रा ।

'न' इति वदन् निराकरणपूर्वकं शिरः चालितवान् उत्तुङ्गः । चित्रा उद्गच्छन्ति अश्रूणि मार्जयन्ती गृहं प्रति धावितवती ।

उत्तुङ्गः सर्वान् नमस्कृत्य कौभवेन सह राजधानीं गतवान् ।

राजभवनद्वारे राजा सपरिवारम् उपस्थाय आदरेण उत्तुङ्गं स्वागतीकृतवान् । ततः तं राजसभां नीत्वा उचिते आसने उपवेशितवान् । सेनापतिः उत्थाय उत्तुङ्गस्य परिचयं साहसकार्यं च विस्तरेण निवेदितवान् । उत्तुङ्गः विनयेन उत्थाय सभाम् आदरेण नमस्कृतवान् । सभ्यानां करताडनशब्देन सः च प्रदेशः व्याप्तः अभवत् ।

ततः राजा उत्थाय उत्तुङ्गसमीपं गत्वा - ''उत्तुङ्ग ! भवतः साहसशीलता, देशभक्तिः च प्रशंसनीया एव । भवन्तं हृत्पूर्वकम् अभिनन्दामः वयम्'' इति उक्त्वा स्वकण्ठे स्थितं रत्नहारम् उत्तुङ्गस्य कण्ठे अर्पयित्वा प्रीत्या आलिङ्गितवान् ।

उत्तुङ्गः राजानं राज्ञीं च नमस्कृत्य युवराज्ञ्याः मल्लिकायाः समीपं गतवान् । ''अस्माकं राज्यं भवता रक्षितं यत् तदर्थं धन्यवादाः'' इति कृतज्ञतापूर्वकम् उक्तवती



मल्लिका ।

करौ योजयित्वा तां नमस्कृत्य सेनाधिपतेः समीपं गतवान् उत्तुङ्गः ।

''राक्षसमृगस्य शवस्य निखननं समुद्रतीरे एव कृतम् । अस्माकं सैनिकाः नौकाद्वयेन भवन्तं माणिक्यपुरीपर्यन्तम् अनुसरन्ति । ते एतावता एव समुद्रतीरं प्राप्तवन्तः सन्ति । कौभवः समुद्रतीरपर्यन्तं भवता सह आगमिष्यति । भवतः शुभप्रयाणम् आशास्महे वयम् । भवतः महाराजम् अस्माकं शुभाशयान् वदतु'' इति उक्तवान् सेनाधिपतिः ।

उत्तुङ्गः पुनरपि सभां नमस्कृत्य कौभवेन सह ततः निर्गतवान् । सभ्याः सर्वे उत्थाय गौरवं प्रदर्शितवन्तः । कौभवः प्रीत्या



उत्तुङ्गस्य हस्तौ गृहीत्वा तं समुद्रतीरं नीतवान्।

समुद्रतीरे उत्तुङ्गस्य नौका पुष्पैः विशेषतः अलङ्कृता आसीत्। नौकायां विविधानि फलानि उपायनानि च पूरितानि आसन्।

कौभवस्य पुत्री चित्रा स्वसखीभिः सह उत्तुङ्गस्य अभिमुखम् आगत्य शताब्दिकापुष्पाणि प्रदर्शयन्ती - "समुद्रस्य तरङ्गाः एतानि पुष्पाणि तीरं प्रापयन्। मया तानि सङ्गृहीतानि" इति हसन्ती अभिनयपूर्वकम् उक्तवती।

"साधु! एतेषु कानिचन युवराज्ञ्यै ददातु। उपायनरूपेण मया अर्पितानि इति तां वदतु च" इति मन्दहासपूर्वकं उक्त्वा नौकाम् उद्दिश्य गतवान् उत्तुङ्गः।

कौभवः उत्तुङ्गं पुनरपि आलिङ्ग्य नौकाम् आरोपितवान्। उत्तुङ्गस्य उपवेशनस्य अनन्तरं भटौ नौकां जलं प्रति प्रेरितवन्तौ। नौका मन्दया गत्या अग्रे प्रस्थिता। भटाः नौकाद्वयेन उत्तुङ्गस्य नौकाम् अनुसृतवन्तौ।

सायङ्कालसमये तिस्रः अपि नौकाः माणिक्यपुरीं प्राप्नुवन्। तीरस्थाः भटाः धावन्तः गत्वा सेनापतिं गम्भीरवर्माणं विषयं निवेदितवन्तः। गम्भीरवर्मा भटानां द्वारा राजानं प्रति वार्तां प्रेषयित्वा स्वयं समुद्रतीरं प्रति गतवान्। यावत् गम्भीरवर्मा समुद्रतीरे उपस्थितः तावता उत्तुङ्गः नौकातः अवतीर्य तीरे स्थितः आसीत्।

सेनाधिपतिं दृष्ट्वा सः उक्तवान् - "राक्षसमृगः दिवं गतः" इति।

"एवम्? सः भवता एव मारितः वा?" इति अत्याश्चर्येण पृष्टवान् सेनाधिपतिः गम्भीरवर्मा।

"न मया मारितः सः। प्रवृत्तं समग्रम् अनन्तरं विस्तरेण निवेदयिष्यामि। अत्र सर्वे कुशलिनः वा? राजा, युवराज्ञी, मम भगिनी च कुशलिनः खलु?" इति पृष्टवान् उत्तुङ्गः।

'सर्वे कुशलिनः' इति उक्त्वा सेनाधिपतिः राजभवनम् उद्दिश्य प्रस्थितवान्। सेनाधिपतिना सह गच्छन् उत्तुङ्गः राक्षसमृगमरणादिकं विस्तरेण निवेदितवान्। उत्तुङ्गः सेनाधिपतिः च सदा

राजभवनं प्राप्तवन्तौ तदा राजा, राज्ञी, युवराज्ञी प्रियंवदा, भगिनी रजनी च उत्तुङ्गस्य अभिमुखम् आगतवन्तः।

"कुलदेवता दीर्घायुष्येण भवन्तम् अनुगृह्णातु" इति वदन् राजा उत्तुङ्गस्य हस्तौ गृहीत्वा तं राजभवनस्य अन्तः नीतवान्।

"राक्षसमृगस्य मरणं कथं जातम् इति वार्तां भवतः मुखात् एव श्रोतुं नितान्तं कुतूहलिनः वयम्" इति उक्तवती युवराज्ञी प्रियंवदा।

"शुम्भस्य आनयनार्थं दूतः प्रेषितः अस्ति मया। अचिरात् एव आगमिष्यति सः" इति वदन् राजा उत्तुङ्गस्य उपवेशनार्थम् आसनं प्रदर्श्य स्वयम् अपि आसने उपविष्टवान्। सर्वेषां पुरतः उत्तुङ्गः प्रवृत्तं समग्रं विस्तरेण निवेदितवान्।

अनन्तरदिने राजगुरुः गौरीनाथः आगत्य उत्तुङ्गस्य मुखात् सर्वं श्रुत्वा उक्तवान् - "राक्षसमृगस्य मरणात् शताब्दिकापुष्पाणि शापविमुक्तानि अभवन्। इतः परं तानि प्रतिवर्षं विकसिष्यन्ति" इति।

"एवं तर्हि एतानि सस्यानि वयम् अस्मदीये उद्याने आरोपयितुं शक्नुमः खलु?" इति उत्साहेन युवराज्ञी पृष्टवती।

"अवश्यं शक्यते" इति मन्दहासपूर्वकम् उक्तवान् राजगुरुः गौरीनाथः।

"वत्से! शताब्दिकापुष्पाणि अस्माकम् उद्याने भविष्यन्ति इति तु महतः सन्तोषस्य विषयः। अहम् अपरम् एकम् अपूर्वम् उपायनम् अपि भवत्यै दातुम् इच्छामि" इति मन्दहासपूर्वकम् उक्तवान् राजा।

"किं तत्?" इति प्रश्नस्य भावं दृष्ट्वा प्रकटितवती प्रियंवदा।

"भवत्याः उत्तुङ्गस्य च विवाहः निर्वर्तनीयः इति निश्चितवान् अस्मि। यः देशार्थं प्राणान् अपि पणीकर्तुम् इच्छति तादृशः धीरः साहसी च एषः भवत्यै योग्यः वरः इति मम आशयः। एतत् अनुमतं वा भवत्याः?" इति पृष्टवान् राजा।

प्रियंवदा लज्जया शिरः अवनमय्य तिष्ठन्ती रजन्याः हस्तं गृहीतवती। रजनी परमानन्देन हसन्ती तस्याः हस्तं मन्दहासप्रकटनपूर्वकं स्थितस्य अग्रजस्य हस्ते स्थापितवती।

(समाप्ता।)





# स्वाभिमानरक्षणम्

साहसी त्रिविक्रमः उद्दिष्टं कार्यं साधयितुं पुनरपि वृक्षसमीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! भवान् मध्यरात्रसमये अस्मिन् भयङ्करे श्मशाने कार्यप्रवृत्तः अस्ति यत् एतेन किं साधयितुम् इच्छति ? यदि साधनीयं महत् कार्यं, तर्हि चिन्ता नास्ति । यदि अयं परिश्रमः वृथा स्यात्, तर्हि उत्तमेभ्यः अवकाशेभ्यः वञ्चितः भवेत् भवान् । अतः एतद्विषये सम्यक् विचिन्त्य एव अग्रिमकार्ये प्रवृत्तः भवतु । उदाहरणार्थं भवतः श्रान्तेः परिहारार्थं च मुग्धस्य मुरलीकृष्णनामकस्य युवकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्" इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कदाचित् चन्द्रशिलानगरस्य

## वेतालकथा



युवराज्ञी चन्द्रमती रथारूढा सखीभिः सह वनविहारार्थं प्रस्थिता। किञ्चिद्दूरं यदा गतम् तदा रथः अरण्यं प्राविशत्। चन्द्रमती विविधपक्षिणां कलरवं शृण्वती महान्तं सन्तोषं प्राप्तवती।

तावता कुतश्चित् मधुरः वेणुनादः श्रुतः। एतत् श्रुत्वा चन्द्रमती आश्चर्यचकिता जाता। सा अनुक्षणं सखीभिः सह रथात् अवतीर्य वेणुनादम् अनुसृत्य वेगेन गतवती।

तत्र कस्यचित् वटवृक्षस्य अधः युवकः कश्चित् नेत्रे निमील्य एकाग्रचित्तेन वेणुं वादयन् आसीत्। अनतिदूरे एव धेनवः तृणानि खादन्त्यः आसन्। युवराज्ञी सखीभिः सह निःशब्दं गत्वा तस्य युवकस्य पृष्ठतः स्थितवती। किञ्चित्कालानन्तरं युवकः वेणुवादनं स्थगितवान्।

तदा युवराज्ञी चन्द्रमती स्वकीयम् अभिनन्दनं द्योतयितुम् उच्चैः करताडनं कृतवती। करताडनशब्देन भीतः युवकः पृष्ठतः दृष्टवान्। महिलाः दृष्ट्वा सः आश्चर्यचकितः। युवराज्ञी युवकं दृष्ट्वा मन्दहासं प्रकटितवती।

अनन्तरं चन्द्रमती युवकं पृष्टवती – "भवतः वेणुवादनं मह्यं नितराम् अरोचत। भवतः नाम किम्? कुत्र वासः भवतः" इति।

तदा सः युवकः – "अहं मुरलीकृष्णः। एतस्य अरण्यस्य पार्श्वे कश्चन ग्रामः अस्ति। तत्र निवसामि अहम्। गोपालनार्थं प्रतिदिनम् अरण्यम् आगच्छामि" इति उक्तवान्।

एतत् श्रुत्वा चन्द्रमती क्षणकालं विचिन्त्य – "मुरलीकृष्ण! अहम् एतस्य देशस्य युवराज्ञी अस्मि। भवतः वेणुवादनं प्रशंसार्हम्। यदि भवतः क्लेशः न स्यात् तर्हि अस्माकं राजभवनम् आगच्छतु। तत्र भवदर्थं सर्वविधाः व्यवस्थाः कल्पयिष्यामि। उत्तमं वेतनं च दास्यामि। प्रतिदिनं भवान् स्ववेणुवादनेन अस्मान् तोषयतु। तदेव कार्यं भवतः। एतद्विषये सम्यक् विचिन्त्य निर्णयं वदतु। मम प्रीत्यर्थम् एतत् स्वीकरोतु" इति वदन्ती कण्ठे धृतं वज्रनिर्मितं कण्ठहारं निष्कास्य मुरलीकृष्णाय दत्तवती।

तदा सूर्यास्तसमयः आसीत्। मुरलीकृष्णः धेनुभिः सह स्वग्रामं प्रति

प्रस्थितः । चन्द्रमती सखीभिः सह ततः राजभवनं गतवती ।

तस्यां रात्रौ मुरलीकृष्णेन निद्रा एव न प्राप्ता । युवराज्ञ्या यत् उक्तं तद्विषये एव चिन्तयति स्म सः । आरात्रि चिन्तनं कृत्वा लाभालाभादिकं समग्रं परिशील्य मुरलीकृष्णः निर्णीतवान् यत् ग्रामं परित्यज्य राजभवनं गमिष्यामि इति ।

अनन्तरदिने एव मुरलीकृष्णः पित्रा सह राजभवनं गतवान् । पित्रा सह आगतं मुरलीकृष्णं चन्द्रमती सादरं सत्कृतवती । तस्य वासार्थं उत्तमां व्यवस्थां परिकल्पितवती । तद्दिनात् आरभ्य मुरलीकृष्णस्य जीवनरीतिः एव परिवृत्ता । यदा यदा युवराज्ञी इच्छति स्म तदा तदा वेणुवादनम् एव मुरलीकृष्णस्य कार्यम् । तस्य मासिकं वेतनं सहस्रं रूप्यकाणि ।

कानिचन दिनानि अतीतानि । रविचन्द्रनामकः दरिद्रः युवकः कश्चित् कदाचित् राजभवनम् आगत्य महाराजं दृष्ट्वा उक्तवान् यत् अहं वेणुवादने महान् पण्डितः इति । तस्मिन् समये चन्द्रमती सभायां पितुः पार्श्वे एव उपविष्टा आसीत् । सा रविचन्द्रम् उक्तवती - 'वेणुवादनं करोतु' इति । रविचन्द्रः अर्धघण्टां यावत् वेणुवादनं कृतवान् । तस्य वेणुवादनं श्रुत्वा सभासदः प्रशंसापूर्वकं करताडनं कृतवन्तः । महाराजः तस्मै अमूल्यानि उपायनानि दत्त्वा तं सत्कृतवान् ।

रविचन्द्रस्य वेणुवादनं श्रुतवत्याः चन्द्रमत्याः मनसि अभासत यत् मुरलीकृष्णस्य वेणुवादनं नीरसम् इति । यतः





रविचन्द्रस्य वेणुवादनं शास्त्रीयं मोहकं च आसीत् ।

महाराजस्य सत्कारं प्राप्य ततः गन्तुम् उद्युक्तः रविचन्द्रः । तदा चन्द्रमती रविचन्द्रं – "यदि भवादृशः सङ्गीतविद्वान् अस्माकम् आस्थानम् अलङ्करिष्यति, तर्हि अस्माकं महान् सन्तोषः भविष्यति" इत्युक्त्वा पितरं पृष्टवती – "तात ! एतद्विषये किं वदति भवान् ?" इति ।

एतत् श्रुत्वा महाराजः रविचन्द्रं – "रविचन्द्र ! भवान् अद्य आरभ्य अस्माकम् आस्थानविद्वान् । भवतः मासिकं वेतनं चतुस्सहस्रं रूप्यकाणि । भवता अनुमन्यते वा एतत् ?" इति पृष्टवान् ।

महाराजस्य एतत् वचनं रविचन्द्रः महता सन्तोषेण अङ्गीकृतवान् । आस्थाने क्रमशः मुरलीकृष्णस्य प्राधान्यं न्यूनं जातम् । चन्द्रमत्याः तु इदानीं मुरलीकृष्णस्य वेणुगानं श्रोतुं किञ्चिदपि आसक्तिः एव नासीत् ।

एवं स्थिते कदाचित् सूर्यशिलानगरस्य युवराज्ञी पद्मजा सख्या सह स्वविवाहस्य आमन्त्रणं कर्तुं स्वयं चन्द्रशिलानगरम् आगतवती । पद्मजा चन्द्रमत्याः मातृभगिन्याः पुत्री । ते उभे अपि बाल्यकालीनाः घटनाः स्मृत्वा सन्तोषम् अनुभूतवत्यौ ।

अनन्तरं पद्मजा सख्याः हस्ते विद्यमानं सुवर्णपञ्जरं स्वीकृत्य ततः शुकं बहिः आनीय – "भगिनि ! एषः शुकः न केवलं सम्भाषणं करोति, अपि तु गीतानि अपि जानाति" इति शुकस्य वैशिष्ट्यम् उक्तवती ।

शुकः किञ्चित्कालं यावत् मधुरं सम्भाषणम् अकरोत्, अनन्तरम् एकं गीतं गीतवान् । चन्द्रमती शुकस्य नैपुण्येन सन्तुष्टा तं लालितवती । तदा – "हा ! भवत्याः लालनम् अतीव हितकरम् अस्ति" इत्युक्तवान् शुकः । एतत् श्रुत्वा चन्द्रमती पद्मजा च उच्चैः हसितवत्यौ ।

तस्मिन् दिने सायङ्काले कालयापनार्थं चन्द्रमती उपवने मुरलीकृष्णस्य वेणुगानकार्यक्रमम् आयोजितवती । तस्मिन् दिने रविचन्द्रः कार्यनिमित्तं पार्श्वग्रामं गतवान् आसीत् इति कारणतः मुरलीकृष्णेन वेणुवादनकार्यक्रमस्य अवकाशः प्राप्तः आसीत् ।

मुरलीकृष्णस्य वेणुगानं पद्मजायै नितराम् अरोचत । आस्थाने सर्वैः अपि अभिनन्दनयोग्यः अपरः कश्चित् गायकः अस्ति इति पद्मजा श्रुतवती आसीत् । अतः सा उक्तवती – "भगिनि ! एतादृशाः वेणुवादकाः अतीव विरलाः । यदि भवत्याः आक्षेपः नास्ति, तर्हि श्वः मुरलीकृष्णं मया सह मम नगरं प्रेषयतु । एतेन मम समययापनं सुकरं भवेत्" इति ।

तदा चन्द्रमती – "भवतु । प्रेषयिष्यामि । किन्तु श्वः गमनसमये शुकम् अत्रैव त्यक्त्वा गन्तव्यं भवत्या" इति मन्दहासपूर्वकम् उक्तवती ।

भगिन्याः वचनं श्रुत्वा पद्मजा उक्तवती – "भवतु । एतस्य शुकस्य सम्भाषणं गानं च श्रुत्वा श्रुत्वा ममापि जामिता जाता अस्ति । भवती एव स्वीकरोतु एतं शुकम्" इति ।

एतावत्पर्यन्तं चन्द्रमत्याः पद्मजायाः च सम्भाषणं शृण्वन् आसीत् मुरलीकृष्णः । सः उक्तवान् – "क्षन्तव्यः अहम् । 'श्वः एव ग्रामं गच्छामि' इति निर्णीतवान् अस्मि अहम्" इति ।

एतत् श्रुत्वा पद्मजा – 'मुरलीकृष्णेन कथमपि अङ्गीकारणीयम्' इति विचिन्त्य उक्तवती – "वेतनविषये भवान् मा चिन्तयतु । अत्र सहस्रं रूप्यकाणि प्राप्नोति स्म खलु भवान् ? अहम् इतोऽपि चतुश्शतं रूप्यकाणि अधिकं दास्यामि" इति ।

तदा मुरलीकृष्णः गम्भीरस्वरेण उक्तवान् – "क्षाम्यतु, युवराज्ञि ! भवती यावत् अधिकं वेतनं दास्यति चेत् अपि अहं भवत्या सह आगन्तुं न सिद्धः । मम चिन्तने



पुनः परिवर्तनं न भविष्यति एव" इति।

वेतालः एवं कथां समाप्य अवदत् - "राजन्! सूर्यशिलानगरस्य युवराज्ञी पद्मजा मुरलीकृष्णाय उत्तमम् उद्योगावकाशं कल्पितवती आसीत्। किन्तु मुरलीकृष्णः तत् तिरस्कृतवान्। एषा मूर्खता खलु? न केवलं तावदेव, शास्त्रीयवेणुवादनं कुर्वतः रविचन्द्रस्य विषये सः असूयाविष्टः अस्ति इति अपि भाति खलु? अन्यच्च स्वप्रगत्यर्थं कारणीभूतायाः युवराज्ञ्याः चन्द्रमत्याः विषये किञ्चिदपि कृतज्ञता नास्ति इति ज्ञायते। यदि तस्याः विषये कृतज्ञता स्यात् तर्हि तस्याः वचनं पालयन् सः पद्मजया सह अगमिष्यत् खलु? एवं च मुरलीकृष्णः मूर्खः, असूयापरः, कृतघ्नः च इति वक्तुं शक्यते। न केवलं तावत्, सः उद्वेगेन निर्णयं स्वीकरोति इत्यपि ज्ञायते खलु? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् अवदत् - "मुरलीकृष्णः पद्मजायाः इच्छानुसारं न व्यवहृतवान्, अपि तु सूर्यशिलानगरगमनं तिरस्कृतवान् इति यत् तत् भवदुक्तैः कारणैः न। स्वग्रामः गन्तव्यः इति मुरलीकृष्णेन यः निर्णयः स्वीकृतः, सः उद्वेगेन स्वीकृतः निर्णयः अपि न। चन्द्रमती मुरलीकृष्णस्य अभिप्रायम् अपृष्ट्वा एव तं पद्मजया सह प्रेषयितुम् इष्टवती। एतस्मात् मुरलीकृष्णस्य स्वाभिमानः जागरितः। सामान्यतः इष्टानिष्टम् अपृष्ट्वा एव स्वामिनः सेवकानां क्रयविक्रयणं कुर्वन्ति। 'शुल्कं मह्यं दत्त्वा भवती मुरलीकृष्णं नयतु' इति चन्द्रमती पद्मजाम् उक्तवती। एतत् श्रुत्वा मुरलीकृष्णः आत्मगौरवं स्वव्यक्तित्वं च रक्षितुम् इच्छन् पद्मजया सह गमनं निराकृतवान्। अत्र मूर्खता वा कृतघ्नता वा नास्ति' इति।

एवं वदतः त्रिविक्रमस्य मौनभङ्गः जातः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# काशीपण्डितः

गौरीपुरनामके अग्रहारे रामावधानी नाम कश्चन पण्डितः आसीत् । सः बाल्ये एव काशीं गत्वा पण्डितानां सकाशात् विद्याभ्यासं कृतवान् आसीत् । केषाञ्चित् वर्षाणाम् अनन्तरं यदा सः प्रत्यागतः तदा ग्रामीणाः तं 'काशीपण्डितः' इति निर्दिशन्तः आदरेण दृष्टवन्तः । एवं ग्रामीणानाम् आदरं प्राप्तवतः रामावधानिनः अहङ्कारः प्रवृद्धः । अतः सः आत्मानं श्रेष्ठं मन्यमानः अन्यान् पण्डितान् तिरस्कारभावेन पश्यति स्म ।

कदाचित् सः भगिनीं द्रष्टुं हरिहरपुरं गतवान् । रात्रौ भोजनानन्तरं भगिनी अग्रजम् उक्तवती – "अद्य रात्रौ मन्दिरे कल्याणोत्सवः भविष्यति । तदङ्गतया सीतारामकल्याणं नाम पाञ्चालिकाकथाप्रदर्शनं भविष्यति । कथा तु भवतः आवुत्तेन एव लिखिता । काशीपण्डितः भवान् तत् प्रदर्शनं दृष्ट्वा यदि साधुवचनं वदेत् तर्हि भवतः आवुत्तस्य कृते महत्त्वं वर्धेत" इति ।

एतत् श्रुत्वा रामावधानी उपेक्षया हसितवान्, तावदेव ।

रात्रौ ग्रामस्य मन्दिरस्य पुरतः पाञ्चालिकाकथाप्रदर्शनम् आरब्धम् । कथायाः निरूपकः काशीपण्डितं रामावधानिनम् आदौ एव आदरेण नमस्कृतवान् । विनयेन निवेदितवान् च – "वयं तु अल्पज्ञाः । महापण्डितः भवान् अस्माकं प्रदर्शनं द्रष्टुम् आगतः यत् तत् तु सौभाग्यम् । यदि कार्यक्रमे कोऽपि दोषः स्यात् तर्हि औदार्येण क्षमा प्रदर्शनीया" इति ।

एतत् श्रुत्वा रामावधानी गर्वेण – "यद्यपि भवन्तः उदरपूरणार्थं कलाम् आश्रितवन्तः, तथापि प्रदर्शनस्य कथा मम आवुत्तेन लिखिता इत्यतः एतत् पश्यामि" इति उक्तवान् ।

कथाप्रदर्शनम् आरब्धम् । दशरथेन क्रियमाणस्य पुत्रकामेष्टियागस्य दृश्यम् आगतम् । 'दशरथः यागशालां निर्माय एकविंशतिविधैः वृक्षैः यूपस्तम्भान् कारितवान्' इति प्रदर्शनस्य निरूपकः उक्तवान् । तदा रामावधानी झटिति उत्थाय – "यागशालायाम् एकविंशतिविधैः वृक्षैः निर्मिताः यूपस्तम्भाः कारिताः इति उक्तं खलु भवता ? तेषां वृक्षाणां नामानि वदतु तावत्" इति उक्तवान् ।

एतत् श्रुतवतः प्रदर्शननिरूपकस्य महान् कोपः आगतः । सः कोपमिश्रितेन स्वरेण – "श्रीमन् ! पामराः वयम् अधिकं न जानीमः । जनरञ्जनार्थम् अतिशयोक्तिः उत्प्रेक्षा च कदाचित् आश्रीयते अस्माभिः । पण्डितः भवान् यदि एकविंशति नामानि वदेत् तर्हि वयम् इतःपरं सर्वेषु प्रदर्शनेषु तानि श्रावयेम" इति उक्तवान् ।

इदानीं रामावधानी सङ्कटे पतितः । अविचिन्त्य प्रश्नः कृतः आसीत् तेन । किन्तु एकविंशतिविधानां वृक्षाणां नामानि सः अपि न जानाति स्म । 'इदानीं किं वा करणीयम् ?' इति चिन्तयतः तस्य मुखं म्लानं जातम् ।

तदा तत्रैव स्थितः रामावधानिनः श्यालः उत्थाय प्रदर्शननिरूपकम् उद्दिश्य – "मम आवुत्तः महापण्डितः । तेन अज्ञातः विषयः नास्ति एव । एकविंशतिविधवृक्षाणां नामानि सः एव मां सूचितवान् । तानि एव मया भवते लिखित्वा दत्तानि सन्ति । 'भवान् एव एकविंशतिवृक्षाणां नामानि वदतु' इति पण्डितम् उद्दिश्य कथनम् औद्धत्यपूर्णं स्यात् । तानि नामानि भवतः मुखात् वाचनीयानि इति उद्देशेन एव तेन मध्ये उत्थाय प्रश्नः पृष्टः । इदानीं भवान् एव तानि नामानि पठतु" इति उक्तवान् । निरूपकः वृक्षाणां नामानि एकैकशः पठितवान् ।

एतस्याः घटनायाः अनन्तरं रामावधानिनः गर्वः सर्वथा अपगतः । ततः आरभ्य सः पण्डितानां पुरतः विनयेन, पामराणां पुरतः आदरेण च व्यवहारम् आरब्धवान् ।





# सुप्रसिद्धाः धार्मिकग्रन्थाः

(प्रपञ्चे सर्वेषाम् अपि मतानाम् आधारग्रन्थः कोऽपि भवति एव । केषाञ्चित् मतानाम् आधारग्रन्थाः बहवः । अत्र एकैकस्य अपि मतस्य सुप्रसिद्धः कश्चन ग्रन्थः सङ्क्षेपेण परिचाय्यते ।)

## वेदाः

भारतीयं चिन्तनम् ऋग्वेदे पराकाष्ठां गतम् अस्ति । ऋग्वेदः न केवलं भारते, अपि तु समग्रे प्रपञ्चे एव अतिप्राचीनः । भारतीयेषु प्रमुखपण्डितेषु अन्यतमः डा. राधामुदमुखर्जी वदति यत् मानवप्रगतेः द्योतकः अस्ति ऋग्वेदः इति ।

प्राचीनकालात् अपि प्रपञ्चे विविधाः संस्कृतयः विकसिताः अभवन् । किन्तु चतुस्सहस्राधिकवर्षेभ्यः पूर्वम् अस्माकं देशे उत्पन्नया वेदकालीनया संस्कृत्या यादृशाः उत्तमाः वेदादयः ग्रन्थाः निर्मिताः तादृशाः ग्रन्थाः अन्यया कयाचित् अपि संस्कृत्या न सृष्टाः । वेदपदस्य अर्थः ज्ञानम् इति । सनातनाः ऋषयः यदा ध्यानमग्नाः आसन् तदा तैः मन्त्राः दृष्टाः । अतः ते 'मन्त्रद्रष्टारः' इति उच्यन्ते । वेदाः 'श्रुतयः' इत्यपि उच्यन्ते । वेदाः चत्वारः । ते च - ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः चेति । वेदाः संस्कृतभाषया उपनिबद्धाः सन्ति । पुस्तकादयः आधुनिके काले खलु दृश्यन्ते ? पूर्वं तु वेदं गुरुमुखात् समग्रं श्रुत्वा, पुनः पुनः उच्चार्य कण्ठस्थीकृत्य आत्मसात् कुर्वन्ति स्म । एकैकस्य वेदस्य अपि



पूर्णज्ञानार्थं बहूनि वर्षाणि यावत् अध्ययनं परिश्रमः च करणीयं भवति ।

ऋग्वेदे वायु-प्रकाश-वृष्ट्यादीनां प्राकृतिकशक्तीनाम् अधिदेवताः वायुः, अग्निः इत्यादयः कृतज्ञतापूर्वकं प्रार्थ्यन्ते । सृष्टौ मानवजीवनम् एव श्रेष्ठम् इति प्रतिपादयन्ति ते । दिव्यत्वं प्राप्तुं मानवेन कीदृशाः उपायाः कथम् आश्रयणीयाः इति बोधयन्ति ते ।

जीवनं नाम किम् ? जीवनस्य लक्ष्यं किं स्यात् ? शाश्वतं पदं किम् ? मानवः किमर्थं जन्म प्राप्नोति ? किमर्थं सः मरणं प्राप्नोति ? मरणानन्तरम् आत्मनः का गतिः ? देवाः नाम के ? वास्तविकं सत्यं किम् ? - इत्येतादृशानां जटिलानां तात्त्विकप्रश्नानां सुयोग्यम् उत्तरं वेदेषु सुचारुक्रमेण सयुक्तिकं प्रतिपादितम् अस्ति ।

ऋषयः, ऋषितुल्याः, कृतपरिश्रमाः पण्डिताः वा वेदार्थतत्त्वं बोधयितुम् अर्हन्ति । जिज्ञासवः शिष्याः केवलं तत् ज्ञानं प्राप्तुम् अर्हन्ति ।

'सनातनधर्मः' इत्यपि जगति ख्यातस्य हिन्दुधर्मस्य मूलाधारग्रन्थाः तु वेदाः एव ।



# भवन्तः जानन्ति वा ?

१. पुराणकथाम् आधारीकृत्य वदन्तु - ऐदम्प्राथम्येन मरणं प्राप्तवान् कः ?
२. रशिया-जपान्देशयोः युद्धस्य स्थगनार्थं प्रयत्नं कृत्वा नोबेल्-शान्तिपुरस्कारं प्राप्तवान् अमेरिकादेशीयः कः ?
३. द्वीपसमूहात्मके फिलिप्पैन्देशे कति द्वीपाः सन्ति ?
४. सर्वेषाम् अपेक्षया अधिककालम् इंग्लण्ड्देशं का पालितवती ? कति वर्षाणि पालितवती सा ?
५. मुम्बयीनगरे 'गेट् वे आफ् इण्डिया' कस्य ब्रिटिष्राजस्य गौरवार्थं निर्मितम् अस्ति ?
६. अमेरिकादेशे स्थितेषु विश्वविद्यालयेषु प्राचीनतमः कः ?
७. प्लास्टिकद्रव्यं कः आविष्कृतवान् ?
८. टर्कीदेशस्य इदानीन्तनराजधानी अङ्कारा । पूर्वतनराजधानी का आसीत् ?
९. एशियाखण्डस्य स च देशः कः, यस्य च नाम द्विसहस्रवर्षेभ्यः पूर्वम् 'अराम्' इति आसीत् ?
१०. आफ्रिकादेशे स्थितेषु सरोवरेषु विशालतमं सरोवरं किम् ?
११. प्राचीन-बैबिलोनियादेशे ईजिप्ट्देशे च वित्तकोशव्यवहारः आसीत् । आधुनिकी वित्तकोशव्यवस्था कुत्र आरब्धा ?
१२. क्रैस्तमतम् ऐदम्प्राथम्येन स्वीकृतवान् रोमन्चक्रवर्ती कः ?
१३. ऐदम्प्राथम्येन अन्तरिक्षनौकातः बहिः आगत्य अन्तरिक्षे सञ्चारं कृतवान् जनः कः ?
१४. कः चण्डीगढनगरं निर्मितवान् ?
१५. इदानीम् इण्डस्नदी इति या कथ्यते तस्याः संस्कृतनाम किम् ?

# उत्तराणि

१. यमः ।
२. थियोडोर् रूस्वेल्ट् ।
३. सप्तसहस्रं द्वीपाः ।
४. विक्टोरियाराज्ञी । ६३ वर्षाणि । (१८३७ - १९०१)
५. पञ्चमजार्जवर्यस्य ।
६. हार्वर्डविश्वविद्यालयः । (१६३६)
७. अलेक्साण्डर् पार्क्स् ।
८. इस्तान्बुल् ।
९. सिरिया ।
१०. विक्टोरियासरोवरम् ।
११. इटलीदेशे ।
१२. कान्स्टण्टैन्चक्रवर्ती ।
१३. अलेक्सी लियोनोव् । १९६५ तमे वर्षे ।
१४. फ्रेञ्चवास्तुशिल्पी लेकार्बूसियर् ।
१५. सिन्धुनदः इति ।



# उपयोगरहिताः उपायाः

सदानन्दः नाम कश्चित् आसीत् । सः बहुविधाः विद्याः जानाति स्म । किन्तु कस्याञ्चित् अपि विद्यायां प्रभुत्वं सम्पादयितुम् अशक्तः सः पित्रार्जिते क्षेत्रे एव कृषिकार्यं कुर्वन् जीवनं यापयति स्म ।

सदानन्दस्य गुरुः कदाचित् सदानन्दं द्रष्टुम् आगतवान् । शिष्यः उत्तमरूपेण कृषिकार्यं कुर्वन् अस्ति इति ज्ञात्वा अतीव सन्तुष्टः गुरुः । किन्तु सदानन्दस्य सन्तोषः नास्ति । सः अतृप्त्या एव उक्तवान् - "गुरुवर्य ! भवता बोधिताः सर्वाः अपि विद्याः अप्रयोजिकाः जाताः । अतः एव अहम् अनन्यगतिकः कृषिकार्यं कुर्वन् अस्मि । वस्तुतः कृषिकार्ये मम किञ्चिदपि आसक्तिः नास्ति" इति ।

एतत् श्रुत्वा गुरुः मन्दहासपूर्वकम् उक्तवान् - "भवतः विस्मरणं किञ्चित् अधिकम् । भवान् यं कमपि उद्योगं करोति चेदपि तत्र अन्ये भवन्तं वञ्चयेयुः । तादृशस्य सम्भवः एव अधिकः । अतः कृषिकार्यम् एव भवते योग्या वृत्तिः" इति ।

तदा - "मम स्मरणशक्तिः सम्यक् एव अस्ति । वस्तुतः वक्तव्यं चेत् न्यूनता मयि नास्ति, अपि तु भवतः बोधनक्रमे अस्ति" इति सदानन्दः असमाधानेन उक्तवान् ।

शिष्यस्य वचनं श्रुत्वा गुरुः उक्तवान् - "तर्हि मया यत् यत् पाठितं, तस्य सर्वस्यापि सारांशं कस्मिंश्चित् लघुपुस्तके लिखित्वा मया भवते दत्तम् आसीत् खलु । तत् पुस्तकम् आनयतु" इति ।

तदा सदानन्दः उक्तवान् - "तेन पुस्तकेन मम किमपि प्रयोजनं नास्ति इति तत् मित्राय दत्तवान् अस्मि" इति ।

एतत् श्रुत्वा गुरुः - "हन्त ! यदि तत् पुस्तकं स्यात्, तर्हि अहं भवतः साहाय्यम् अकरिष्यम् । इतःपरं तत् पुस्तकं न प्रत्यागमिष्यति । 'पुस्तकं वनिता वित्तं

"अनामिका"



परहस्तगतं गतम्' इति सूक्तिं विस्मृतवान् वा भवान् ?'' इति पृष्टवान् ।

तदा सदानन्दः सगर्वं हसन् - ''सर्वं स्मरामि अहम् । न केवलं तावदेव, यस्मै कस्मैचित् किमपि वस्तु दत्तं चेत् तस्य प्रतिस्वीकरणार्थं भवता पाठितान् चतुरः उपायान् अपि सम्यक् स्मरामि अहम् । अतः यदा कदापि मित्रतः पुस्तकं प्रतिस्वीकर्तुं शक्नोमि अहम्'' इति उक्तवान् ।

शिष्यस्य वचनं श्रुत्वा गुरुः - ''तर्हि दिनचतुष्टयानन्तरम् अहं पुनः अत्र आगमिष्यामि । तावति काले तत् पुस्तकं प्रतिस्वीकृत्य स्थापयतु'' इत्युक्त्वा ततः गतवान् ।

अनन्तरं सदानन्दः मित्रस्य श्रीधरस्य गृहं गत्वा तम् उक्तवान् - ''मम गुरुः सकलविद्यानां सारांशम् एकस्मिन् लघुपुस्तके लिखित्वा मह्यं दत्तवान् आसीत् । तत् पुस्तकम् अहं भवते दत्तवान् आसम् । किन्तु इदानीं तत् पुस्तकं मह्यम् आवश्यकम् । अतः आनीय ददातु तत्'' इति ।

तदा श्रीधरः किञ्चित् विचिन्त्य - ''मम किञ्चित् विस्मरणम् अधिकम् । तादृशं पुस्तकं भवतः सकाशात् न स्वीकृतम् इति चिन्तनं मम । तथापि अन्वेषणं कृत्वा वदिष्यामि भवन्तम्'' इति उक्तवान् ।

सदानन्दः ततः निर्गतवान् । सः अनन्तरदिने पुनः श्रीधरस्य गृहं गतवान् । श्रीधरः सदानन्दं महता खेदेन उक्तवान् - ''बहुधा अन्विष्टं चेदपि तत् पुस्तकं न लब्धम् । कृपया क्षाम्यतु माम्'' इति ।

तदा सदानन्दः उक्तवान् - ''सम्यक् स्मरतु । भवान् तत् पुस्तकं कदाचित् अन्यस्मै दत्त्वा विस्मृतवान् स्यात् । तस्मिन् पुस्तके निधिः कथं वशीकरणीयः इति रहस्यम् लिखितम् अस्ति । तत् अहम् एव ज्ञातुं प्रभवामि, न अन्यः । भवान् तत् पुस्तकम् आनीय ददाति चेत्, यः निधिः प्राप्यते तस्मिन् भवते अर्धभागं दास्यामि'' इति ।

सदानन्दस्य वचनं श्रीधरस्य पत्नी अपि श्रुतवती । तस्मिन् दिने श्रीधरः तस्य पत्नी च पुस्तकं बहुधा अन्विष्टवन्तौ । कस्मैचित् दत्तं स्यात् वा इति बहुधा स्मृतवन्तौ । किन्तु किमपि प्रयोजनं न जातम् । पुस्तकं न लब्धम्

एव ।

उपायद्वयेन अपि किमपि प्रयोजनं न जातम् इति ज्ञात्वा सदानन्दः अनन्तरदिने श्रीधरस्य गृहं गत्वा तद्गृहस्य कर्मकरीं सीताम् आहूय तां किमपि रहस्यम् उक्तवान् ।

सदानन्दस्य वचनानुसारं कर्मकरी सीता श्रीधरस्य पत्नीम् – ''अम्ब ! भवत्याः पतिः तत् पुस्तकं तिन्त्रिणीवने वसन्त्यै जानक्यै दत्तवान् अस्ति । एतं विषयं भवतीं वक्तुं भयम् अनुभवति भवत्याः पतिः । तत् पुस्तकं कथमपि जानकीतः सम्पाद्य सदानन्दाय दीयते चेत् भवतां लाभः भविष्यति'' इति बोधितवती ।

जानकी तद्ग्रामस्य मन्त्रवादिनी । मन्त्रतन्त्रादिकरणे प्रसिद्धिं प्राप्तवती आसीत् सा । तादृश्यै मन्त्रवादिन्यै पतिः पुस्तकं दत्तवान् अस्ति इति कर्मकरीतः ज्ञात्वा श्रीधरस्य पत्नी पत्युः विषये नितरां कुपिता । एतत्कारणतः पतिपत्न्योर्मध्ये कलहः आरब्धः । कलहकारणतः गृहे अशान्तिः उत्पन्ना । एतेन खिन्नः श्रीधरः सदानन्दस्य गृहं गत्वा परिस्थितिं तं निवेद्य – ''भवतः पुस्तककारणतः पतिपत्न्योः आवयोः मध्ये कलहः आरब्धः अस्ति । कृपया मम गृहम् आगत्य मम पत्नीं बोधयतु । तेन मम गृहे अशान्तिः परिहृता स्यात्'' इति ।

एतत् श्रुत्वा सदानन्दः कोपेन – ''मम पुस्तकं प्रधानं मम । भवतः कुटुम्बविषये अहं किमर्थं चिन्तयामि ? अद्य सायङ्कालात्पूर्वं



मम पुस्तकं यदि न प्रत्यर्पयति भवान् तर्हि छद्रेशं भवतः गृहं प्रेषयिष्यामि'' इति ।

छद्रेशः कश्चित् महामल्लः । दृढकायः सः द्रष्टुं बकासुरः इव अस्ति । सः सदानन्दस्य प्राणप्रियः स्नेहितः । 'महामल्लः छद्रेशः यदा कदापि आगत्य मम उपरि आक्रमणं कुर्यात्' इति भयेन श्रीधरः पार्श्वग्रामस्थं बन्धुगृहं गतवान् ।

चत्वारि दिनानि अतीतानि । सदानन्दस्य गुरुः पुनः शिष्यस्य गृहम् आगत्य 'पुस्तकं लब्धं वा ?' इति पृष्टवान् ।

तदा सदानन्दः निरुत्साहेन उक्तवान् – ''गुरुवर्य ! यथाशक्ति प्रयत्नं कृतवान् अहम् । तथापि तत् पुस्तकं सम्पादयितुं न शक्तवान् अहम्'' इति ।

सदानन्दस्य वचनं श्रुत्वा गुरुः - "मया पूर्वमेव उक्तम् आसीत् - 'पुस्तकं, वनिता, वित्तं च यदि परहस्तं गच्छति, तत् पुनः न प्रत्यागच्छति' इति । एतं विषयं विस्मृतवान् वा भवान् ?" इति पृष्टवान् ।

तदा सदानन्दः - "गुरुवर्य ! मया विस्मृतस्य विषये एव भवान् पुनः पुनः वदन् अस्ति । भवता पाठितान् चतुरः उपायान् सम्यक् स्मरामि अहम् इति अंशं तु न चिन्तयति एव भवान् । किमर्थम् एवम् ?" इति वदन् आत्मना आचरितान् साम-दान-भेद-दण्डोपायान् सम्यक् विवृतवान् ।

शिष्यस्य एतत् वचनं श्रुत्वा गुरुः दीर्घं निःश्वस्य उक्तवान् - "यदि भवतः सामर्थ्यं नास्ति तर्हि कस्यापि उपायस्य प्रयोगेण न किमपि प्रयोजनम्" इति ।

एतेन अपमानितः सदानन्दः कोपेन गुरुम् उक्तवान् - "मम सामर्थ्यं नास्ति इति मा वदतु । भवतः बोधनक्रमः समीचीनः नास्ति इति जानातु भवान्" इति ।

एतत् श्रुत्वा गुरुः उक्तवान् - "वत्स ! सदानन्द ! गतेषु चतुर्षु दिनेषु अहं पार्श्वग्रामे एव आसम् । मया बोधितविद्याभिः उत्तमानि प्रयोजनानि प्राप्तवान् कश्चित् अस्ति । सः महता सन्तोषेण मां सादरं सत्कृतवान् । भवान् असमर्थः विस्मरणशीलः च इत्यस्य सः एव साक्षी" इति ।

गुरोः वचनं श्रुत्वा - "कथम् ?" इति आश्चर्येण पृष्टवान् सदानन्दः ।

तदा गुरुः - "येन पुस्तकेन भवान् प्रयोजनं न प्राप्तवान्, तेनैव पुस्तकेन सः सर्वं साधितवान् अस्ति । अतः एव मया उक्तम् - 'सः प्रयोजकः, भवान् अप्रयोजकः' इति । किन्तु पार्श्वग्रामस्थः मम शिष्यः न । भवता एव स्वकीयं पुस्तकं तस्मै दत्तम् आसीत् । सः भवतः मित्रम् । तस्य नाम श्रीकरः । पुस्तकं श्रीकराय दत्त्वा तत् विस्मृत्य श्रीधरस्य विषये भवान् उपायानां प्रयोगं करोति चेत् भवतः पुस्तकं न प्रत्यागच्छति खलु ! भवतः उपायाः प्रयोजनरहिताः" इत्युक्तवान् ।

गुरोः एतत् वचनं श्रुत्वा सदानन्दः स्वकीयं दोषं ज्ञात्वा गुरुं क्षमां प्रार्थितवान् ।





# कार्यरहितस्य अकार्यम्

पूर्वं कस्मिंश्चित् ग्रामे माधवः नाम कश्चित् आसीत् । सः कदाचित् मध्याह्नभोजनं समाप्य गृहस्य पुरतः स्थिते अङ्गणे सुखेन उपविष्टवान् आसीत् । 'कार्यरहितस्य मनः पिशाचस्य आवासः' इति वचनं श्रूयते खलु ? माधवस्य विषये अपि एवम् एव जातम् । तस्य मनसि विचित्राः भावाः उद्भवन्तः आसन् ।

अल्पे एव काले अपरिचितः कश्चन युवकः तस्य गृहस्य पुरतः आगत्य स्थितवान् । तस्य मुखस्य दर्शनात् ज्ञायते स्म यत् सुदूरप्रयाणात् नितरां श्रान्तः अस्ति एषः इति । सः माधवसमीपम् आगत्य पृष्टवान् - "श्रीमन् ! माधवस्य गृहम् एतत् एव वा ?" इति ।

एतस्य श्रवणस्य समनन्तरम् एव माधवस्य मनसि काचित् विचित्रा इच्छा उत्पन्ना - 'एषः किञ्चित् पीडनीयः' इति । अतः सः तम् उक्तवान् - "न । एतत् माधवस्य गृहं न" इति ।

"माधवस्य गृहं न वा एतत् ?" इति आश्चर्येण पृष्टवान् सः अपरिचितः आगन्तुकः ।

"न श्रीमन् ! माधवस्य गृहम् इतः उत्तरस्यां दिशि स्थितस्य शिवालयस्य पार्श्वे अस्ति इति मम स्मरणम् । अतः तत्र गत्वा विचारयतु तावत्" इति उक्तवान् माधवः ।

आगन्तुकः उत्तरस्यां दिशि गतवान् । घण्टानन्तरं प्रत्यागत्य सः माधवम् उक्तवान् - "श्रीमन् ! भवता सूचितस्य चिह्नस्य आधारेण शिवालयसमीपे मया विचारः कृतः । किन्तु तत्रत्यैः उक्तं यत् माधवस्य गृहं तत्र कुत्रापि नास्ति इति, एतत्प्रदेशे एव अस्ति इति च" इति ।

"एवं वा ? जनाः कदाचित् किमपि वदन्तः भ्रमं जनयन्ति । अस्तु तावत् । अत्र तु

''सुभद्रा''



माधवस्य गृहं नास्ति । भवान् एतेन एव मार्गेण अश्वत्थवृक्षपर्यन्तं गच्छतु । तत्र जनान् विचारयतु'' इति उक्तवान् माधवः ।

माधवेन सूचिते मार्गे गत्वा अर्धघण्टानन्तरं प्रत्यागतः सः आगन्तुकः - ''श्रीमन् ! अश्वत्थवृक्षपरिसरे माधवः इति कोऽपि न निवसति इति तत्रत्याः वदन्ति । माधवस्य गृहम् एतत्परिसरे एव अस्ति इति उक्तवन्तः ते'' इति उक्तवान् ।

''अहो आश्चर्यम् ! कीदृशाः जनाः सन्ति एतस्मिन् ग्रामे ! अस्तु, भवान् पश्चिमदिशि ग्रामसभाकार्यालयपर्यन्तं गत्वा तत्र विचारयतु'' इति उक्त्वा आगन्तुकं पुनः प्रेषितवान् माधवः ।

घण्टानन्तरं प्रत्यागतः आगन्तुकः माधवं दृष्ट्वा - ''भोः ! ग्रामसभाकार्यालयसमीपे माधवनामकः कोऽपि नास्ति एव । सर्वे वदन्ति यत् एतत्परिसरे सः निवसति इति'' इति उक्तवान् ।

''सर्वं विचित्रम् इव भासते खलु ? एतत् तु माधवस्य गृहं सर्वथा न । हां, ग्रामसभाकार्यालयसमीपे स्थितः माधवः गृहपरिवर्तनं कृतवान् इति कदाचित् मया श्रुतम् इति स्मर्यते । अतः भवान् दक्षिणदिशि गच्छतु । तिन्त्रिणीवनस्य पार्श्वे विचारयतु'' इति उक्तवान् माधवः ।

तिन्त्रिणीवनपर्यन्तं गत्वा प्रत्यागतः सः आगन्तुकः श्रान्तिवशात् कष्टेन पदानि स्थापयन् माधवसमीपम् आगत्य - ''भोः, तिन्त्रिणीवनस्य परिसरे प्रायः पिशाचाः निवसन्ति, न तु मानवाः । समीपस्थेषु क्षेत्रेषु कार्यं कुर्वन्तः जनाः मया पृष्टाः । तैः सर्वैः उक्तं यत् एतत्परिसरे एव माधवस्य गृहम् अस्ति इति । भवान् तु वदति - एतत्परिसरे माधवस्य गृहं नास्ति एव इति । सर्वम् एतत् विचित्रम् इव भासते । चतसृषु दिक्षु अटनात् अहं नितरां श्रान्तः अस्मि । इतःपरम् अन्वेषणे मम उत्साहः सर्वथा नास्ति । अहं प्रतिगच्छामि तावत्'' इति उक्तवान् ।

'इतःपरं पीडनेन अलम्' इति आलोच्य माधवः तम् आगन्तुकम् उक्तवान् - ''ग्रामे चतसृषु दिक्षु निवसन्तः अपि उक्तवन्तः वा - एतत्परिसरे एव माधवः निवसति इति ? युक्तम् एतत् । अहम् एव माधवः । एतत् एव माधवस्य मम गृहम् । इदानीं वदतु भवान् -

आगमनस्य कारणं किम् इति'' इति ।

तदा सः आगन्तुकः उद्गच्छन्तम् अपि कोपं निगृह्य उक्तवान् - ''भोः, अहम् एव माधवः इति पूर्वम् एव अनुक्त्वा मां वृथा समग्रे ग्रामे आटितवान् खलु भवान् !'' इति ।

''मित्र ! अलं कोपेन'' इति वदन् माधवः सान्त्वनवचनानि उक्त्वा - ''ग्रामे कति जनाः मां, मम गृहं च जानन्ति इति ज्ञातुम् इच्छन् अहम् एवम् आचरितवान् । इदानीं मया सप्रमाणं ज्ञातं यत् ग्रामे सर्वे मां सम्यक् जानन्ति एव इति । सर्वे मां यथा जानीयुः तथा प्रसिद्धिं प्राप्तवान् अस्मि इति तु मम अभिमानस्य विषयः । तदस्तु, केन उद्देशेन भवान् अत्र आगतः ?'' इति पृष्टवान् ।

आगन्तुकः माधवस्य कुचेष्टापरतां दृष्ट्वा कोपम् अनुभवन् - ''भोः, जनार्दनपुरतः भवदर्थम् अमूल्यं सन्देशम् आनीतवान् आसम् । कोटीश्वरः भवतः बन्धुः श्रीकण्ठवर्यः ह्यः हृदयाघातकारणतः दिवङ्गतः । तस्य पत्नी अपत्यानि वा न सन्ति इति भवान् जानाति एव । सः मरणात् पूर्वं भवन्तम् अन्यौ दायादौ च स्मृत्वा उक्तवान् यत् भवतः त्रीन् प्रति अपि मरणवार्ता प्रेषणीया, भवत्सु त्रिषु यः प्रथमम् आगत्य अन्तिमसंस्कारं करोति तस्मै मदीया समग्रा सम्पत्तिः दातव्या इति । अहं श्रीकण्ठवर्यस्य सेवकः । 'शीघ्रातिशीघ्रं वार्ता प्रापिता चेत् भवान् सम्पत्तिं प्राप्नुयात्, सम्पत्तिप्राप्त्या सन्तुष्टः भवान् पारितोषिकरूपेण मह्यं किमपि दद्यात्' इति चिन्तयित्वा अहं वायुवेगेन अत्र आगतवान् । भवतः मूर्खतायाः कारणतः सर्वं व्यर्थं जातम् । एतावता एव अन्ययोः दायादयोः अन्यतमः जनार्दनपुरं प्राप्य अन्त्यसंस्कारव्यवस्थां कृत्वा सम्पत्तेः उत्तराधिकारित्वं प्राप्तवान् स्यात् एव । मूर्खः भवान् अपारसम्पत्तितः वञ्चितः अभवत् । मम श्रमः अपि व्यर्थीकृतः भवता'' इति उक्तवान् ।

'विनाकार्यम् उपवेशनात् ग्रामस्य चिन्तनस्य अनुगुणं यत् कृतं तत् महते अनर्थाय जातम्' इति एतां वस्तुस्थितिं जानन् माधवः महत् दुःखम् अनुभूतवान् ।





# वीरः हनुमान्

पाण्डवाः कौरवैः सह प्रवृत्तायां द्यूतक्रीडायां पराजयं प्राप्य वनवासं कुर्वन्तः आसन्। द्रौपदी भीमेन सह वनविहारं कुर्वती विशाले कस्मिंश्चित् प्रदेशे उपविश्य दूरतः दृश्यमानस्य हिमगिरेः सौन्दर्यम् आस्वादयन्ती आसीत् । तस्मिन् समये अकस्मात् महान् वायुः उत्पन्नः । तदा किञ्चित् अपूर्वं पुष्पम् आगत्य द्रौपद्याः अङ्के पतितम् । तस्य पुष्पस्य सुगन्धः सर्वत्र प्रसृतः । तस्य पुष्पस्य दलानि नितरां सुन्दराणि आसन्। तत् पुष्पं किञ्चित् अपि म्लानं न आसीत्।

तस्य पुष्पस्य नाम सौगन्धिका इति । कुबेरस्य नगरे अलकापुर्यां मानससरोवरम् अस्ति । मानससरोवरसम्बद्धे दलसरोवरे दिने एकमेव सौगन्धिकापुष्पं विकसति । कुबेरः प्रतिदिनं पुष्पकविमानेन कैलासं गत्वा सौगन्धिकापुष्पेण शिवपूजां करोति । पूर्वदिने येन पुष्पेण अर्चितं तत् पुष्पं स्वनगरं नयति च । तदेव सौगन्धिकापुष्पं वायुवेगकारणतः पुष्पकविमानतः अधः पतत् द्रौपद्याः अङ्के पतितम् आसीत्।

द्रौपदी तत् पुष्पम् आश्चर्येण पश्यन्ती भीमम् उक्तवती - "एतादृशं नूतनं पुष्पम् आनीय ददातु" इति।

भीमः एतत् अङ्गीकृत्य गदां स्कन्धे आरोप्य प्रस्थितवान्। सः सौगन्धिकापुष्पम् अन्विष्यन् हिमालयस्य समीपस्थं कदलीवनं प्रविष्टवान् । तस्मिन् कदलीवने हनुमान् वृद्धवेषेण कस्यचित् कदलीवृक्षस्य मूलम् अवलम्ब्य उपविष्टवान् आसीत् । हनुमान् पादौ प्रसार्य उपविश्य रामनामस्मरणं कुर्वन् आसीत्। तस्य दीर्घं पुच्छं बहुदूरं यावत् मार्गस्य अवरोधपूर्वकं पतितम् आसीत् ।



भीमः तत् वानरस्य पुच्छम् इति ज्ञातवान् । नितरां गर्वितः सः तत् पुच्छम् अतिक्रम्य गन्तुं न इष्टवान् । परितः दृष्टवान् भीमः । रामनामस्मरणं कुर्वन् हनूमान् दृष्टः तेन । हनूमन्तं दृष्ट्वा भीमः पादेन सशब्दं भायितवान् ।

हनूमान् तु एतत्सर्वं श्रुत्वा अपि तिरस्कारभावं प्रदर्शयन् रामनामस्मरणे मग्नः आसीत् ।

तदा क्रुद्धः भीमः कोपेन उक्तवान् – "अये वृद्धवानर ! किमेतत् भवतः कार्यम् ? पुच्छं स्वेच्छया प्रसारयन् मार्गस्य अवरोधं कुर्वन् अस्ति खलु भवान् ? मार्गतः पुच्छम् अपसारयतु तावत्" इति ।

तदा हनूमान् श्रान्तः इव दीर्घं निःश्वसन् उक्तवान् – "वत्स ! अहं तु वृद्धः, बलहीनः च । मम पुच्छं भवान् एव पार्श्वे अपसार्य गच्छतु । मद्विषयकदयया किञ्चिदिव साहाय्यं करोतु कृपया" इति ।

भीमः गदया पुच्छम् अपसारयितुं प्रयत्नं कृतवान् । किन्तु हनूमतः पुच्छं किञ्चिदपि न अकम्पत । भीमः पुनरपि बलेन हस्ताभ्याम् अपसारयितुम् इष्टवान् । तथापि न किमपि प्रयोजनं जातम् ।

एतत् दृष्ट्वा हनूमान् पृष्टवान् – "वत्स ! किमिदम् ? नोदनेन मां पीडयन् अस्ति भवान् ? वृद्धवानरस्य मम पुच्छम् अपसारयितुम् अपि शक्तिः नास्ति वा भवतः ? एवं तर्हि एतादृशः भवान् किं वा महत् कार्यं साधयितुं शक्नुयात् ? भवादृशाः युवकाः बहुधा अविचिन्त्य त्वरया कार्ये प्रवर्तन्ते । तथापि प्रियायाः इच्छायाः पूरणार्थं तु सहसा प्रवृत्ताः भवन्ति । किन्तु भवान् तु तादृशः न खलु ?" इति ।

एतत् श्रुत्वा क्रुद्धः भीमः – "अये उन्मत्तप्रलापिन् ! अलम् अधिककथनेन" इति उक्त्वा गदया हनूमन्तं बलात् प्रहर्तुम् उद्युक्तः ।

तदा हनूमान् – "अहो, गदायुद्धार्थं माम् आह्वयन् अस्ति वा भवान् ? तारुण्ये 'गदायुद्धे अप्रतिमः' इति कीर्तिं प्राप्य वार्धक्ये मौनम् उपविशन्तं मां भवान् युद्धार्थम् आह्वयति ? भवादृशाः सोदराः यदि स्युः तर्हि अरण्यवासः शरणं स्यात् । अस्तु तावत्, मम समीपे अपि एका गदा अस्ति । यथा अहं तथैव

सा अपि जीर्णावस्थाम् आपन्ना अस्ति'' इति वदन् गदा स्वीकर्तुं प्रयत्नं कृत्वा अपि गदाम् अप्राप्नुवन् भीमम् उद्दिश्य – ''वीरसहोदर ! गदायुद्धार्थम् आह्वयन् अस्ति खलु भवान् ? कृपया मम गदाम् अत्र ददातु ! वृद्धः अस्मि अहम् ! अतः किञ्चित् साहाय्यं करोतु'' इति उक्तवान् ।



हनूमतः गदाम् उन्नेतुम् एव कष्टम् अनुभूतवान् भीमः । तदा हनूमान् – ''मम तारुण्यकाले अन्तस्साररहिता लघुः गदा एव न आसीत् । मम पूर्वजाः तु शिलामय्याः गदायाः एव उपयोगं कुर्वन्ति स्म'' इति वदन् गदां लीलया उन्नीय भीमस्य शिरसि आशीर्वादार्थं हस्तम् इव स्थापितवान् । किन्तु एतेन एव महतीं वेदनां प्राप्नुवन् भीमः चीत्कुर्वन् महता कोपेन हनूमन्तं स्वगदया आहृतवान् ।

हनूमान् झटिति उत्थाय स्वगदाम् उन्नीय हुङ्कृतवान् । तदा कदलीवनम् एव कम्पितम् अभवत् ।

उभयोः अपि गदायुद्धं किञ्चित्कालं प्रवृत्तम् । तावता भीमस्य गदा हस्ताच्च्युता सती पार्श्वे पतिता । एतत् दृष्ट्वा हनूमान् स्वगदाम् अपि पार्श्वे क्षिप्त्वा भुजास्फालनं कृतवान् ।

मल्लयुद्धसमये भीमेन कश्चन अंशः अवगतः । 'यदि हनूमान् इच्छेत् तर्हि क्षणमात्रेण मां चूर्णीकुर्यात् । यतः तावत् सामर्थ्यम् अस्ति तस्य । किन्तु गदायुद्धे मल्लयुद्धे च मया अज्ञातान् विविधान् युद्धप्रकारान् आश्रित्य सः गुरुः शिष्यं यथा तथा मां बोधयन् अस्ति इव भासते । मम बोधनार्थम् एव एतत् तन्त्रं हनूमतः' इति आलोचितवान् भीमः ।

एवं चिन्तयित्वा सः युद्धं परित्यज्य हनूमतः पादौ गृहीत्वा – ''महानुभाव ! भवान् हनूमान् इति इदानीं ज्ञातं मया । अहम् अपि वायुदेवस्य वरप्रसादात् एव जातः । कुन्तीपुत्रः धर्मराजानुजः भीमः अहम् । आशीर्वादेन माम् अनुगृह्णातु'' इति प्रार्थितवान् ।

हनूमान् वात्सल्येन भीमं हस्तद्वयेन अपि उन्नीय – ''वत्स ! आवाम् उभौ अपि वायुपुत्रौ । आवां सहोदरौ'' इति वदन् अधः अवतार्य प्रीत्या आलिङ्गितवान् ।



भीमः महान्तं सन्तोषम् अनुभूय उक्तवान् – "आर्य ! भवतः विश्वरूपं द्रष्टुं तीव्रा इच्छा अस्ति मम" इति ।

"वत्स ! एतत् द्वापरयुगम् । अतः भवान् विश्वरूपं द्रष्टुं न शक्नोति । तथापि प्रदर्शयामि तावत्" इति उक्त्वा शरीरं वर्धितवान् । तस्य शिरः मेघमण्डलम् अस्पृशत् । आञ्जनेयः उच्चैः गर्जितवान् ।

एतं शब्दम्, एतत् रूपं च द्रष्टुम् अशक्नुवन् भीमः – "आर्य ! एतत् रूपं द्रष्टुं न शक्नोमि । कृपया विश्वरूपं संहरतु तावत्" इति उक्तवान् ।

हनूमान् पूर्वतनं रूपं प्राप्य – "केन उद्देशेन अत्र आगतम् इति भवता न उक्तम् एव" इति भीमम् उक्तवान् । भीमः आगमनस्य उद्देशम् उक्तवान् ।

तदा हनूमान् – "भीमसेन ! दलसरोवरं केशिकी नाम यक्षी रक्षति । तस्याः अपूर्वं सामर्थ्यम् । बलसामर्थ्यादिभिः तस्याः सम्मुखीकरणं व्यर्थम् एव । सा यं यं पश्यति तं तं मायाजालेन वशीकरोति एव । भवान् तां पश्यतु । यदा भवान् मायाजाले पतति तदा अहं भवन्तं रामनामोच्चारणेन जागरयामि । तदा जागरूकः भवतु । केशिकी शिवभक्ता । भवान् गमनसमये मम रोमाणि नयतु । यदा सा भवन्तं ग्रहीतुम् आगच्छति तदा एकं रोम पातयतु । ततः शिवलिङ्गम् उत्पद्यते । तदा सा सहस्रनामभिः शिवार्चनं कर्तुम् उद्युक्ता भवति । एवं कुर्वन् उपायेन कार्यं साधयतु" इति उक्त्वा पुच्छस्य अग्रभागतः रोमाणि अपनीय भीमाय दत्तवान्, दलसरोवरं प्रति गमनार्थं मार्गं प्रदर्शितवान् च ।

केशिकी आगच्छन्तं भीमं दूरात् एव दृष्ट्वा जगन्मोहकम् अपूर्वं रूपं प्राप्य नृत्यं कर्तुं गातुं च उद्युक्ता अभवत् । भीमः नृत्यदर्शनेन गानश्रवणेन च परवशतां प्राप्तवान् । तदा अदृश्यरूपेण आगतेन हनूमता उच्चारितं रामनाम तेन श्रुतम् । एतत् श्रुत्वा भीमः जागरूकतां प्राप्य अग्रे गतवान् । महता प्रयत्नेन अपि भीमं वशीकर्तुम् अशक्नुवती केशिकी घोराकारं प्राप्य भीमस्य पुरतः स्थितवती ।

भीमः हनूमतः वचनं स्मरन् तस्याः पुरतः एकं रोम पातितवान् । तदा तत्र



शिवलिङ्गं प्रत्यक्षं जातम् । लिङ्गं दृष्ट्वा केशिकी महत्या भक्त्या शिवलिङ्गं साष्टाङ्गं नमस्कृत्य स्तोत्रपठनम् आरब्धवती । तस्याः शिवपूजायाः समाप्तितः पूर्वम् एव भीमः दलसरोवरं प्राप्य सौगन्धिकाकमलं समूलम् उत्पाट्य ततः पलायितवान् । पूजां समाप्य केशिकी महता वेगेन भीमम् अनुसृतवती । तस्याः केशाः अग्निरूपं प्राप्य भीमम् आवृत्य अतिष्ठन् ।

भीमः पुनः रोम पातितवान् । केशिकी पुनरपि शिवपूजायाम् उद्युक्ता अभवत् । एवं तत्र तत्र रोम पातयन् केशिकीं शिवपूजायां प्रवर्तयन् भीमः विशेषक्लेशं विना एव कदलीवनं प्राप्तवान् ।

भीमः सौगन्धिकापुष्पं हनूमते प्रदर्शयन् उक्तवान् - "महानुभाव ! भवतः अनुग्रहात् इदानीं मया विजयः प्राप्तः । इतःपरं कौरवाणाम् अस्माकं च युद्धं प्रवर्तिष्यते । तस्मिन् भवता अस्माकं साहाय्यं करणीयम् इति पाण्डवानां प्रतिनिधीभूय अहं प्रार्थयामि" इति ।

तदा हनूमान् - "भीम ! अहं तत्काले युद्धं तु न करिष्यामि । किन्तु भवतः प्रार्थनां निराकर्तुम् अपि न शक्नोमि । अतः अहं युद्धकाले उपस्थितः सन् भवतः अनुजस्य रथस्य पताकायां निवासं करिष्यामि । भवतः सर्वान् रक्षिष्यामि च । युद्धे भवतां जयस्तु निश्चितः । अतः इदानीं भवान् निश्चिन्तः सन् प्रतिगत्य सौगन्धिकापुष्पं द्रौपद्यै दत्त्वा तां सफलमनोरथां करोतु । सा यदा सीतारूपेण आसीत् तदा मायामृगम् इष्टवती । इदानीं सौगन्धिकापुष्पम् इष्टवती । अतः तां मद्वचनैः वदतु यत् एतादृशी अपेक्षा अनुचिता इति । सौगन्धिकापुष्पेण शिवम् अर्चयित्वा प्रसादरूपेण तत् तस्यै ददातु । शिवार्चनतः भवतः शुभं भविष्यति । ऐश्वर्यं च प्राप्यते । सौगन्धिकापुष्पं कदापि म्लानं न भविष्यति" इति उक्त्वा भीमं प्रीत्या आशीर्वादेन अनुगृह्य प्रेषितवान् ।

भीमः सौगन्धिकापुष्पं नीत्वा द्रौपद्यै दत्त्वा तस्याः द्वारा शिवपूजां कारितवान् । अनन्तरं हनूमतः सन्देशं यथावत् श्रावितवान् च ।

एतत् श्रुत्वा द्रौपदी क्षणकालं लज्जया मौनं स्थितवती । ततः सा भीमम् उक्तवती -

"मया सौगन्धिकापुष्पे इच्छा प्रदर्शिता इत्यतः एव खलु भवता तस्य महानुभावस्य दर्शनं प्राप्तम् ? ततः एव खलु आशीर्वादः प्राप्तः ? अतः यत् प्रवृत्तं तत् सर्वं मङ्गलाय एव" इति ।

तदा भीमः अन्ये पाण्डवाश्च उक्तवन्तः - "आं, भवत्या युक्तम् एव उक्तम्" इति । हनूमतः अनुग्रहस्य प्राप्त्या ते सर्वे नितरां सन्तुष्टाः आसन् ।

पाण्डवाः नियमानुसारं द्वादश वर्षाणि यावत् वनवासम्, एकं वर्षं यावत् अज्ञातवासं च कृतवन्तः । ततः स्वदायभागं राज्यं प्राप्तुम् इच्छन्तः सन्ध्यर्थं दूतरूपेण श्रीकृष्णं कौरवसमीपं प्रेषितवन्तः च । कृष्णः कौरवसमीपं गतवान् ।

कृष्णेन उक्तानि हितवचनानि दुर्योधनेन न श्रुतानि । अतः कृष्णदौत्यं विफलं जातम् । सन्धिः न जातः । अतः युद्धम् अपरिहार्यं जातम् ।

कुरुक्षेत्रे रणकाहलाः वादिताः । अर्जुनस्य रथस्य ध्वजस्य पताकायां हनूमान् सूक्ष्मरूपेण निलीय स्थितवान् । कृष्णः अर्जुनस्य सारथिः जातः । उभयोः अपि सैन्ययोः घोरं युद्धं प्रवृत्तम् ।

सारथिः कृष्णः योग्येन क्रमेण रथं चालयन् समये समये अर्जुनं कार्याकार्यमपि उपदिशन् मार्गदर्शनं कृतवान् । अर्जुनः शत्रुसंहारं लीलया कुर्वन् सर्वत्र विजयं प्राप्य विजयः इति ख्यातिं प्राप्तवान् । कृष्णः 'विजयसारथिः' इति 'पार्थसारथिः' इति च ख्यातः अभवत् ।

पूर्वं दुश्शासनः द्रौपदीं केशेषु गृहीत्वा



राजसभां यदा आकृष्य आनीतवान् तदा भीमः प्रतिज्ञां कृतवान् आसीत् यत् अहं दुश्शासनस्य रक्तेन द्रौपद्याः केशान् आर्द्रीकृत्य वेणीं रचयिष्यामि इति । कुरुक्षेत्रयुद्धे भीमः दुश्शासनं संहृत्य तदीयं हृदयं विभिद्य ततः रक्तं स्वीकृत्य द्रौपद्याः केशान् लिप्तवान् । तदा द्रौपदी केशालङ्कारं कृत्वा सौगन्धिकापुष्पं धृतवती । युद्धकाले ध्वजे निवासं कृत्वा सर्वेषां रक्षणं कृतवन्तं हनूमन्तं भक्त्या श्रद्धया च नमस्कृतवती ।

गदायुद्धे भीमः दुर्योधनस्य ऊरुद्वयं भञ्जितवान् । भीमस्य प्रतिज्ञा अक्षरशः पालिता अभवत् । अधर्ममार्गगामिनः कौरवाः समूलं नाशं प्राप्नुवन् । धर्ममार्गानुयायिनः पाण्डवाः च विजयं प्राप्तवन्तः ।

युद्धस्य अनन्तरं कृष्णः हनूमन्तम् उद्दिश्य – ''आञ्जनेय ! पूर्वं भवान् कौशलेन कार्यक्षमत्वेन च व्यवहरन् दुष्टस्य रावणस्य संहारकार्ये श्रीरामस्य साहाय्यं कृतवान् । इदानीं च कुरुक्षेत्रयुद्धे ध्वजे निवसन् पाण्डवान् सर्वविधेभ्यः अपायेभ्यः अपि रक्षन् धर्मराजस्य साहाय्यं कृतवान् । धर्ममार्गम् अनुसरतां विषये विशेषकृपा भवतः'' इति मन्दहासपूर्वकम् उक्तवान् ।

तदा हनूमान् विनयेन – ''महारथस्य अर्जुनस्य सारथ्यं कुर्वन् भवान् यत् मार्गदर्शनं कृतवान् तेनैव विजयः प्राप्तः । अहं ध्वजे केवलं वासं कृतवान् । अतः युद्धे मम प्रत्यक्षभागः न आसीत् एव । सर्वं त्रिकालज्ञेन जगत्सूत्रधारेण भवता एव कृतम्'' इति उक्तवान् ।

''भवान् ध्वजे निवासं कृतवान् यत् तावत् एव अस्मासु धैर्यम् अवर्धयत् । ध्वजः एव विजयस्य हेतुः जातः । अतः एव सः विजयध्वजः इति ख्यातः अभवत् अपि'' इति उक्तवान् कृष्णः ।

ततः हनूमान् पाण्डवान् सर्वान् प्रीत्या आशिषा अनुगृह्य पाण्डवानां कृष्णस्य च अनुज्ञां प्राप्य गन्धमादनपर्वतं प्रति गतवान् । प्रशान्ते तस्मिन् परिसरे रामनाम स्मरन् तपसि लीनः अभवत् सः ।





# अतिरसखाद्यप्रियता

गिरिजाम्बायाः जामाता मधुसूदनः । विवाहानन्तरं पक्षाभ्यन्तरे एव सः यदा सपत्नीकः आगतः तदा गिरिजाम्बा सन्तुष्टा । "अम्ब ! भवत्या कृताः अपूपाः अपूर्वाः । पायसं तु अमृतायते" इत्येवं सः यदा श्लाघितवान् तदा सा नितरां सन्तुष्टा । किन्तु ततः मासत्रयाभ्यन्तरे पञ्चवारम् आगत्य यदा सः विविधभक्ष्याणां खादनार्थम् इच्छां प्रकटितवान् तदा गिरिजाम्बा असन्तुष्टा जाता ।

नवरात्रोत्सवसमये पत्या सह आगता पुत्री मञ्जुला मातरम् उक्तवती – "अम्ब ! भवत्याः जामात्रे अतिरसखाद्यं नितरां रोचते । यावत् तस्य पितामही जीवति स्म तावत् एतस्य इच्छायाः अनुगुणम् अतिरसखाद्यानि निर्माय ददाति स्म इति श्रूयते । इदानीं सा नास्ति । प्रबलया अतिरसखाद्यखादनेच्छया पीड्यमानः अस्ति सः" इति ।

"वत्से ! अहम् एतद्विषये असहाया अस्मि । अतिरसखाद्यनिर्माणे अहम् अकुशलिनी" इति गिरिजाम्बा यद्यपि पुत्रीम् उक्तवती, तथापि पुत्रीं जामातरं च खेदयितुम् अनिच्छन्ती सा प्रतिवेशिन्याः विद्यादेव्याः द्वारा अतिरसखाद्यानि कारयित्वा करण्डके प्रपूर्य पुत्र्यै दत्तवती ।

तानि च अतिरसखाद्यानि सप्ताहाभ्यन्तरे खादितवान् मधुसूदनः । तथापि तस्य खादनेच्छा न उपशान्ता । अतः सः श्वशुरगृहं गन्तुं भाटकशकटं निश्चित्य शकटेन सहैव गृहम् आगतवान् ।

तदा आश्चर्यम् अनुभवन्ती पतिं पृष्टवती मञ्जुला – "सप्ताहात् पूर्वम् आवाभ्यां तत्र गत्वा आगतं खलु ? पुनः इदानीं गमनं किमर्थम् ?" इति ।

"अये, अलं एतादृशेन प्रश्नेन । अद्य



आश्वयुजपूर्णिमा । विद्यादेवीद्वारा अतिरसखाद्यानि कारयित्वा खादनीयं मया" इति वदन् गमनत्वरां प्रदर्शितवान् मधुसूदनः ।

तस्मिन् दिने श्वशुरगृहं गत्वा विद्यादेव्या अतिरसखाद्यं कारयित्वा खादितवान्, गृहं प्रति अपि आनीतवान् सः ।

पुनः शनिप्रदोषव्याजेन श्वशुरगृहम् आगतवान् मधुसूदनः । एतत् दृष्ट्वा 'जामाता दशमो ग्रहः । अहो पीडा एतस्य !' इति खेदेन स्वगतम् उक्तवती गिरिजाम्बा ।

मध्याह्ने आपणं पिधाय भोजनार्थम् आगतः मङ्गलायाः पिता पत्नीं पृष्टवान् - "जामाता पुत्री च अद्य सायं प्रतिगच्छतः खलु ?" इति ।

"हुं प्रतिगमनम् । अतिरसखाद्यानां राशिः अर्पितः चेदेव सः द्वारात् बहिः पदं स्थापयेत् । अतः इदानीम् एव कर्मकरस्य रङ्गस्य द्वारा अतिरससामग्रीः प्रेषयतु । सायङ्कालाभ्यन्तरे वा अतिरसखाद्यानि सिद्धानि भवन्तु" इति उक्तवती गिरिजाम्बा ।

"रङ्गः अद्य उक्तवान् यत् पत्न्या सह पार्श्वस्थग्रामस्य रथयात्रां प्रति गन्तुम् इच्छामि इति । मया अनुमतिः दत्ता । अतः एतावता सः गृहात् निर्गतः स्यात्" इति उक्तवान् मङ्गलायाः पिता ।

"अनिष्टं संवृत्तम् । प्रथमं कश्चित् कर्मकरं प्रेषयित्वा रङ्गम् अत्र आनाययतु" इति उक्तवती गिरिजाम्बा ।

मङ्गलायाः पित्रा प्रेषितः कर्मकरः रङ्गं दृष्ट्वा उक्तवान् - "भवता विद्यादेव्याः गृहं गत्वा अतिरसखाद्यं कारयित्वा आनेतव्यम् । एषा स्वामिन्याः सूचना" इति ।

एतत् श्रुतवतः रङ्गस्य महान् खेदः । 'भवतीं रथयात्रां प्रति नेष्यामि' इति गतात् चतुर्थात् दिनात् प्रतिदिनं पत्नीं वदन् आसीत् सः । अद्य प्रस्थानसमये स्वामिन्याः आज्ञां श्रुत्वा कुपिता रङ्गस्य पत्नी धृतानि पुष्पाणि भूमौ क्षिप्त्वा प्राचीनां शाटिकां धृत्वा अश्रूणि स्रावयन्ती कटं प्रसार्य आच्छादकेन आत्मानम् आच्छाद्य पतिं निन्दन्ती शयनं कृतवती ।

अनन्यगतिकः रङ्गः स्वामिन्याः गृहम् आगतवान् । गिरिजाम्बा आर्द्रान् तण्डुलान्,

गुडं, घृतं च रङ्गाय दत्त्वा - "तत्रैव उपविश्य खाद्यं कारयित्वा एव आनयतु। भवता अन्यत्र गतं चेत् विद्यादेवी खाद्यदाने विलम्बं कुर्यात्" इति उक्तवती।

यदा रङ्गः विद्यादेव्याः गृहं गतवान् तदा तत्र गृहे बहवः बालाः दृष्टाः।

गिरिजाम्बया प्रेषिता वार्ता श्रुत्वा विद्यादेवी - "भवतः स्वामिनी कृतस्य कार्यस्य निमित्तं धनं दातुं विस्मरति चेदपि समये समये खाद्यानि तु कारयति एव। अद्य मम ग्रामात् भगिनीपुत्राः आगताः सन्ति। अतः अद्य खाद्यनिर्माणं सर्वथा असाध्यम्" इति उक्तवती।

एतत् श्रुत्वा रङ्गः किङ्कर्तव्यतामूढः जातः। 'अद्य इतःपरं रथयात्रां प्रति गमनेन न किमपि प्रयोजनम्। अद्य एतत् अतिरसखाद्यनिर्माणकार्यं न समाप्तं चेत् श्वः करणीयम्। तदा श्वः अपि रथयात्रां प्रति गमनं न सम्भवेत्। तदा तु पत्नी कोपेन गृहं परित्यज्य गच्छेत् अपि' इत्येवं चिन्तयतः रङ्गस्य महान् खेदः जातः। 'कथमपि एतस्याः खाद्यनिर्माणपीडातः विमोचनं प्राप्तव्यम्' इति चिन्तयन् सः एकम् उपायम् अपि चिन्तितवान्। सः विद्यादेव्याः समीपं गत्वा स्वस्य उपायं निवेद्य - "मया यः उपायः सूचितः तदनुगुणं व्यवहरणेन भवत्या किञ्चित् धनं प्राप्यते। इतःपरं निश्शुल्कं कार्यं न आपतिष्यति अपि" इति उक्तवान्।

"अस्तु" इति सन्तोषेण अङ्गीकारं सूचितवती विद्यादेवी।



रङ्गद्वारा मधुसूदनः ज्ञातवान् यत् अद्य अतिरसखाद्यानि न सिद्ध्यन्ति इति। अतः सः गृहगमनविचारं परित्यक्तवान्।

सायङ्काले कूपसमीपे आम्रवृक्षस्य अधः उपविष्टस्य मधुसूदनस्य समीपम् आगत्य उक्तवान् रङ्गः - "आर्य! विद्यादेवी भवदर्थम् अतिरसखाद्यं निर्मातुं न शक्यते इति यद्यपि उक्तवती अस्ति, किन्तु स्वभगिनीपुत्राणां निमित्तं तु अपूर्वाणि अतिरसखाद्यानि निर्मितवती अस्ति। तस्याः भगिनीपुत्रैः खाद्यमानानि तानि खाद्यानि दृष्टवतः तु मम मुखे लालाधारा एव विनिर्गता। करकरेति शब्दः। मधुरतरः सुन्दरः वर्णः!! अपूर्वः घृतगन्धः!!! अहो! किं वर्णयामि खाद्यस्य



वैशिष्ट्यम् !" इति ।

एतत् श्रुतवन्तः मधुसूदनस्य खाद्यखादनेच्छा प्रबला जाता । "भवतः वचनं सत्यं स्यात् नाम । किन्तु गगनकुसुमविषये चिन्तनेन किं प्रयोजनम् ? अन्यगृहे स्थितं खाद्यम् अस्माभिः प्राप्तुं न शक्यते खलु ?" इति निराशया उक्तवान् मधुसूदनः ।

"किमर्थं निराशा ? बालानां निमित्तं प्रभूतं खाद्यं निर्माय विद्यादेवी करण्डके प्रपूर्य अट्टे स्थापितवती अस्ति । सर्वं मया प्रत्यक्षं दृष्टम् । अन्धकारप्रसारानन्तरम् आवां तत्र गत्वा खाद्यानि स्वीकृत्य आगच्छाव" इति उक्तवान् रङ्गः ।

"तन्नाम चौर्यं करणीयम् इति ? जामाता अहं चौर्ये उद्युक्तः भवामि चेत् मम अपख्यातिः स्यात् खलु ?" इति उक्तवान् मधुसूदनः ।

"अपख्यातेः भीतिः किमर्थम् ? भवतः श्वश्रूः विद्यादेव्याः द्वारा सर्वदा खाद्यानि कारयति चेदपि धनं तु न ददाति इति श्रूयते । अतः भवान् धनदानव्याजेन मया सह आगच्छतु । अग्रे यत् करणीयं तत् अहं सूचयिष्यामि" इति वदन् उत्साहं पूरितवान् रङ्गः ।

मधुसूदनः रङ्गस्य वचनम् अङ्गीकुर्वन् तेन सह प्रस्थितवान् । यावत् तौ विद्यादेव्याः गृहं प्राप्तवन्तौ तावता अन्धकारः प्रसृतः आसीत् । गृहे विद्यादेवी एकाकिनी स्तम्भम् अवलम्ब्य उपविष्टवती आसीत् ।

गृहम् आगतं मधुसूदनं दृष्ट्वा पृष्टवती विद्यादेवी - "किमर्थम् इदानीम् आगतम् ? 'अतिरसखाद्यानि श्वः निर्माय दास्यामि' इति मया उक्तम् आसीत् खलु ?" इति ।

"तदर्थं न आगतं मया । पूर्वम् अतिरसखाद्यानि निर्मितानि यत् तदर्थं धनं दातुम् आगतवान् अस्मि" इति वदन् मधुसूदनः पञ्चविंशतिं रूप्यकाणि विद्यादेव्यै दत्तवान् ।

तावता रङ्गः - "आर्ये ! गृहं परित्यज्य गतः भवत्याः पतिः गतसप्ताहे मम आवुत्तेन नगरे दृष्टः इति श्रूयते । 'सः इदानीं स्थूलत्वम् आढ्यत्वं च प्राप्तवान् इति भासते' इति मम आवुत्तः वदति स्म" इति उक्तवान् ।

विद्यादेवी मधुसूदनस्य पुरतः

स्वकुटुम्बस्य विषये वार्तालापं कर्तुम् अनिच्छन्ती इव रङ्गं कटाक्षेण दृष्ट्वा तं दूरं नीतवती । गमनात् पूर्वं रङ्गः नेत्रसङ्केतेन मधुसूदनं किमपि सूचितवान् ।

यदा रङ्गः विशादेवी च नेत्रपथात् अपगतौ तदा मधुसूदनः झटिति पाकशालां प्रविश्य करण्डके विद्यमानानि खाद्यानि वस्त्रेण बद्धवान् । एकं स्वीकृत्य मुखे स्थापितवान् च ।

वस्तुतः करण्डके खाद्यैः सह रक्तपिपीलिकाः आसन् । ताः मधुसूदनं दंष्टुम् उद्युक्ताः अभवन् । शरीरे तत्र तत्र ताः दशन्ति स्म । मधुसूदनः खाद्यानि तत्रैव क्षिप्त्वा पिपीलिकानां निवारणे मग्नः । पिपीलिकास्तु वस्त्रस्य अन्तर्भागं प्रविश्य दशन्ति । पिपीलिकादंशनं निवारयन् मधुसूदनः अपमानं च प्रकटयितुम् अनिच्छन् पृष्ठतः स्थितं द्वारम् उद्घाट्य प्राकारम् उल्लङ्घ्य मार्गम् आगतवान् ।

तम् एव प्रतीक्षमाणः रङ्गः तस्य समीपं गत्वा - "किं प्रवृत्तं श्रीमन् ? विशादेवीम् अनुक्त्वा एव चोरस्य इव आगमनं सर्वथा न शोभते" इति उच्चस्वरेण उक्तवान् ।

तदा मधुसूदनः मन्दस्वरेण - "आर्य ! उच्चैः मा वदतु कृपया । प्रवृत्तं सर्वम् अनन्तरं कथयिष्यामि । अत्र यत् भवता दृष्टं श्रुतं वा, तत् अन्यत्र कुत्रापि मा वदतु । मम मानं रक्षतु कृपया । एतानि दश रूप्यकाणि स्वीकरोतु तावत्" इति उक्त्वा रङ्गाय दश रूप्यकाणि दत्तवान् ।

अर्धघण्टाभ्यन्तरे तौ गृहं प्रतिगतौ । मधुसूदनः श्वश्रूम् उक्तवान् - "आर्ये ! एषु दिनेषु तैलनिर्मितानि घृतनिर्मितानि वा खाद्यानि मम अस्वास्थ्याय भवन्ति । अद्य प्रातः भवती यानि खाद्यानि परिवेषितवती तेषां कारणतः मुखे इतरत्र च रक्तपिटकाः सञ्जाताः सन्ति, पश्यतु । प्रायः पित्तविकारात् एवं जातं स्यात् । अतिरसं तु अहम् इतःपरं जन्मनि कदाऽपि न खादिष्यामि । श्वः प्रातः अहं गृहं गमिष्यामि । त्वरया प्रतिगतम् इति खेदं मा करोतु भवती" इति ।

मधुसूदनस्य प्रतिगमनवार्तां श्रुत्वा रङ्गः गिरिजाम्बा च नितरां सन्तुष्टौ ।





# राजपदप्राप्तियोगः

प्राचीने काले कस्मिंश्चित् ग्रामे शिवरामः नाम कश्चन गोपालकः आसीत् । युवकः सः बलवान् धैर्यवान् च । विविधाः देशाः द्रष्टव्याः इति तस्य इच्छा । युद्धे भागः ग्रहणीयः इत्यपि तस्य इच्छा आसीत् ।

कदाचित् शिवरामः धेनूः चरणार्थं प्रेषयित्वा स्वस्य अपेक्षाः स्मरन् वृक्षस्य अधः शयनं कृतवान् आसीत् । अल्पे एव काले तेन समीचीना निद्रा प्राप्ता । निद्रायां सः कञ्चन विचित्रं स्वप्नं दृष्टवान् ।

स्वप्ने सः एकं पर्वतं दृष्टवान् । पर्वतशिखरे एकं सिंहासनं दृष्टम् । सिंहासने आत्मनः उपवेशनं दृष्टम् । पार्श्वे राज्ञीवेषेण युक्ता काचित् परमसुन्दरी अपि दृष्टा । स्वस्य शिरसि किरीटम् अपि दृष्टम् ।

''राजाऽहम् । अहं महाराजः'' इति स्वगतं वदन् सः जागरणं प्राप्तवान् । नेत्रे उन्मील्य परितः दृष्टवान् सः । 'अहो अपूर्वः आसीत् स च स्वप्नः' इति चिन्तयन् सः धेनुभिः सः ग्रामं प्रतिगतवान् ।

अनन्तरदिने अपि तेन सः एव स्वप्नः दृष्टः । 'मम स्वप्नः कदाचित् सत्यम् अपि भवितुम् अर्हति' इति चिन्तितवान् सः । 'श्वः अपि एषः एव स्वप्नः दृष्टः चेत् दूरे दृश्यमानं पर्वतम् आरुह्य गमिष्यामि । पार्श्वस्थस्य अभिरामपुरराज्यस्य राजा अहम् एव भवेयम्' इति निर्णीतवान् सः ।

अनन्तरदिने अपि शिवरामेण सः एव स्वप्नः दृष्टः । 'इतःपरम् एषा गोपालनवृत्तिः मास्तु मम' इति निश्चित्य सः पर्वतशिखरम् उद्दिश्य प्रस्थितवान् । निरन्तरं गच्छन् सः सायङ्कालसमये पर्वतशिखरं प्राप्तवान् । किन्तु तत्र न सिंहासनं दृष्टं, न वा महाराज्ञी । तथापि शिवरामः निरुत्साही न जातः । पुनरपि अग्रे गच्छन् सः अभिरामपुरराज्यस्य सीमां प्राप्तवान् ।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

शिवरामः नितरां बुभुक्षितः आसीत् । 'समीपे कुत्रापि ग्रामः दृश्येत वा' इति परितः दृष्टिं प्रसारितवान् सः । किन्तु परितः सर्वत्र उन्नतैः महावृक्षैः युक्तं घनारण्यं दृष्टं, नान्यत् किमपि ।

अन्धकारे घोरारण्ये गमनं दुष्करम् एव इति निश्चित्य 'कस्यचित् वृक्षस्य अधः उपविश्य विश्रान्तिः स्वीकरणीया' इति सङ्कल्पितवान् सः ।

पार्श्वे कश्चन महावृक्षः आसीत् । तस्य अधः उपविश्य पादौ प्रसारितवान् सः । पिपासायाः, बुभुक्षायाः, निरन्तरं गमनात् जातायाः श्रान्तेश्च कारणतः तेन निद्रा न प्राप्ता एव । तावता एव अनतिदूरे अश्वम् आरुह्य आगच्छतां पञ्चषाणां पुरुषाणां सम्भाषणध्वनिः तेन श्रुतः ।

शिवरामः तेषां सम्भाषणं सावधानं श्रुतवान् । तेषां सम्भाषणस्य श्रवणात् शिवरामः ज्ञातवान् यत् अनतिदूरे किञ्चन प्राचीनं गृहम् अस्ति इति, अद्य ते तत्रैव वसन्तः रात्रिं यापयिष्यन्ति इति च । शिवरामः विना शब्दं पदं स्थापयन् मन्दं तान् अनुसृतवान् ।

अल्पे एव काले ते तत् प्राचीनं गृहं प्राप्तवन्तः । सर्वे अश्वात् अवतीर्य अन्तः गत्वा उत्तरीयादिकम् एव अधः प्रसार्य शयनं कृतवन्तः । 'अये किं करणीयम् ?' इति चिन्तयन् शिवरामः भित्तिपार्श्वे स्थितवान् आसीत् । 'एते सर्वे प्रायः चोराः एव' इति निर्णीतवान् सः ।

द्वित्राणां निमेषाणाम् अनन्तरं तेषां नायकस्य दर्पयुक्तः ध्वनिः श्रुतः - ''अये





व्याघ्रगमन ! अद्य किं सम्पादितं भवता ?" इति ।

तदा उत्तररूपेण कश्चित् उक्तवान् - "श्रीमन् ! यत् वस्तु स्वप्ने अपि द्रष्टुं न शक्यं तादृशम् अपूर्वं वस्तु अद्य आनीतवान् अस्मि । मया किञ्चन पुतकम् आनीतम् अस्ति । तस्य विधूननं कुर्मः चेत् यावत् आवश्यकं तावत् धनं प्राप्यते" इति ।

'साधु ! व्याघ्रगमन, साधु !' इति स्वसन्तोषं प्रदर्श्य अपरम् उद्दिश्य पृष्टवान् नायकः - "अये शृगालमित्र ! भवता किम् आनीतम् ?" इति ।

तदा अन्यः उक्तवान् - "श्रीमन् ! अद्य मया अपि अपूर्वं वस्तु एव आनीतम् । मया यत् उष्णीषम् आनीतं तत् धृतं चेत् इच्छामात्रेण तत् सर्वासु दिशु बाणवर्षणं करिष्यति" इति ।

"साधु ! साधु !" इति उक्त्वा अपरं पृष्टवान् चोरनायकः - "सिंहबल ! भवता किं वा आनीतम् ?" इति ।

तदा सिंहबलः उक्तवान् - "आर्य ! आश्चर्यं नाम मया अपि किञ्चन अपूर्वं वस्तु आनीतम् । तच्च कश्चन खड्गः । तेन खड्गेन भूमिः ताडिता चेत् सहस्रं सैनिकाः उत्पद्यन्ते । यावद्वारं ताड्यते तावद्वारं सैनिकानाम् उत्पत्तिः भविष्यति" इति ।

"अहो, महान् सन्तोषः । भवद्भिः त्रिभिः अपि अपूर्वम् एव वस्तु आनीतम् । तानि सर्वाणि तत्र भित्तिपार्श्वे स्थापयित्वा निद्रां कुर्वन्तु । श्वः प्रातःकाले बहूनि कार्याणि करणीयानि सन्ति" इति अनुचरान् आदिष्टवान् चोरनायकः ।

शिवरामः तेषां सम्भाषणं समग्रं श्रुतवान् आसीत् । यदा चोराः निद्रावशं गताः तदा सः मन्दम् आगत्य भित्तिपार्श्वे स्थितानि उष्णीष-खड्ग-पुतकानि स्वीकृत्य विना शब्दं ततः निर्गतवान् ।

दिनत्रयस्य अनन्तरं सः अभिरामपुरस्य राजधानीं प्राप्य प्रासादं गत्वा 'राजदर्शनं करणीयं मया' इति उक्तवान् ।

"कः भवान् ? राजदर्शनं तावत् सुलभं न । ज्ञायते खलु एतत् ?" इति दर्पेण एव उक्तवान् द्वाररक्षकः भटः ।

"माम् एव पृच्छति वा भवान् - भवान् कः इति ? अहम् अस्मि शिवसिंहः । स्मरतु

एतत्' इति दर्पेण एव उक्तवान् शिवरामः ।

"भवान् शिवसिंहः वा ? क्षाम्यतु श्रीमन् अज्ञानात् कृतं मम अपराधम् । इतः आगच्छतु मान्यः" इति वदन् तं सादरं महाराजसमीपं नीतवान् भटः ।



तत्समये राजा सिंहासने उपविष्टः आसीत् । तस्य पार्श्वे राजकुमारी अपि आसीत् । 'मया स्वप्ने या दृष्टा तद्वत् एव अस्ति एषा । राजमुकुटमात्रं शिरसि न दृश्यते' इति आलोचितवान् शिवरामः ।

राजा शिवरामं दृष्ट्वा – "आगमनस्य किं कारणम् ?" इति पृष्टवान् ।

शिवरामः स्वस्य खड्गस्य उष्णीषस्य च वैशिष्ट्यम् उक्त्वा – "अहं बहुषु युद्धेषु जयं प्राप्तवान् अस्मि । यदि भवान् इच्छेत् तर्हि भवन्तं चक्रवर्तिनम् अपि कुर्याम्" इति उक्तवान् ।

राजा शिवरामस्य वचनं श्रुत्वा नितरां सन्तुष्टः । सः शिवरामम् उक्तवान् – "चक्रवर्तित्वं कालान्तरे चिन्तयाम । इदानीं गान्धारराजः मम देशं वशीकर्तुं सैन्येन सह आगतः अस्ति । यदि भवतः शक्तिः स्यात् तर्हि तं प्रथमं जयतु" इति ।

"अल्पकालसाध्यं कार्यम् एतत् । ततः पूर्वं मम कश्चन प्रश्नः अस्ति । यदि अहं गान्धारराजं जयेयं तर्हि किं भवान् राजकुमारीं मम पत्नीं कुर्यात् ?" इति पृष्टवान् शिवरामः ।

तदा राजा मन्दहासपूर्वकम् उक्तवान् – "निश्चयेन" इति । 'यः प्रबलं शत्रुं गान्धारराजं जयेत् सः निश्चयेन वीराधिवीरः स्यात् एव । तादृशाय पुत्र्याः दानं मम भूषणम् एव' इति चिन्तनम् आसीत् राज्ञः ।

'एषः तरुणः अपूर्वः वीरः एव स्यात् । यतः प्रबलः शत्रुः महता सैन्येन सह आगतः अस्ति इति पित्रा यदा उक्तं तदा अपि भीति नाम्ना अपि अप्राप्नुवन् एषः जयप्राप्त्यनन्तरं यत् करणीयं तद्विषये वार्तालापं कुर्वन् अस्ति । तन्नाम जयः तु निश्चितः एव इति एतस्य दृढा मतिः । एतादृशः धैर्यवान् लोके अन्यः न स्यात् । एतस्य सौन्दर्यम् अपि अपूर्वम् अस्ति । एतादृशः यदि मम पतिः भवेत् तर्हि तत् मम सौभाग्यम् । मम पितुः एकमात्रपुत्री अस्मि अहम् । अतः मम भाविना पतिना एव राज्यपालनं करणीयं

भविष्यति । तदर्थम् एषः एव मम पतिः भवितुम् अर्हति' इति चिन्तयित्वा सा अनुरागपूर्णेन कटाक्षेण शिवरामं दृष्टवती ।

राजकुमार्याः अनुरागपूर्णं कटाक्षं लक्षितवतः शिवरामस्य उत्साहः द्विगुणितः प्रवृद्धः । सः उत्साहेन ततः प्रस्थितवान् । "एषः तरुणः एव युद्धे जयं यथा प्राप्नुयात् तथा वरेण अनुगृह्णातु कृपया" इति भगवन्तं प्रार्थितवती राजकुमारी ।

शिवरामः कैश्चित् सैनिकैः सह गत्वा गान्धारराजं सम्मुखीकृतवान् । घोरं युद्धं प्रवृत्तम् । यदा यदा सैनिकाः आवश्यकाः तदा तदा शिवरामः खड्गेन भूमिं ताडयति स्म । ततः सहस्रशः सैनिकाः उत्पद्यन्ते स्म । शिवरामस्य उष्णीषं तु निरन्तरं बाणवर्षणं करोति स्म ।

एतस्मिन् युद्धे महतीं हानिं प्राप्तवान् गान्धारराजः सायङ्कालसमये अवशिष्टेन सैन्येन सह रणरङ्गात् पलायितवान् । जयध्वनिं कुर्वद्भिः सैनिकैः अनुस्रियमाणः शिवरामः राजसमीपम् आगत्य विजयवार्तां निवेदितवान् ।

एतादृशः विजयः प्राप्येत इति राज्ञा अन्येन वा नैव ऊहितम् आसीत् ।

सन्तुष्टः राजा शिवरामं प्रीत्या अभिनन्द्य - "शिवसिंह ! वीराधिवीरः भवान् मम जामाता भविष्यति यत् तत् मम परमसौभाग्यम् । अहं तु वृद्धः जातः । अतः भवन्तम् एव सिंहासने उपवेशयिष्यामि" इति मन्दहासपूर्वकम् उक्तवान् ।

तदनन्तरं द्वित्रेषु एव दिनेषु राजकुमारी-शिवरामयोः विवाहः सवैभवं सम्पन्नः । शिवरामस्य पट्टाभिषेकः अपि प्रवृत्तः । सः राजमुकुटं धृत्वा यदा सिंहासने उपविष्टवान् तदा किरीटधारिणी राजकुमारी पार्श्वे उपविष्टवती ।

'मया स्वप्ने एतत् दृश्यम् एव दृष्टम् आसीत्' इति आनन्देन स्वगतम् उक्तवान् शिवरामः ।

'वीराधिवीरः मम पतिः जातः यत् तत् मम सौभाग्यम्' इति चिन्तयन्ती राजकुमारी अपि नितरां सन्तुष्टा ।



# का त्वरा स्नानार्थम् ?

| | |
|---|---|
| पिता - वत्से, स्नानगृहं रिक्तं वा इति पश्यतु । | Child, please check if the bathroom is free. |
| पुत्री - मन्दारः स्नानं कुर्वन् अस्ति तात । | Mandara is taking bath, father. |
| पि - तर्हि तस्य स्नानस्य अनन्तरं मां सूचयतु । | Let me know after he has finished. |
| पु - ततः पितृव्यः स्नानं करिष्यति । | Uncle wants to go next, father. |
| पि - का त्वरा तस्य ? | What is the urgency for him ? |
| पु - अमलापुरे विवाहः अद्य इति विस्मृतं वा भवता ? अमलापुरं प्रति नववादने बस्यानम् अस्ति । अतः सः शीघ्रं स्नात्वा उपाहारं समाप्य गन्तुम् इच्छति । | You forgot that there is a marriage today at Amalapur ? The bus for Amalapur is at 9 O' clock. He wants to finish his bath and breakfast fast and take that bus. |
| पि - तर्हि तस्य स्नानस्य अनन्तरं माम् आह्वयतु । | Call me then after he has also finished. |
| पु - पितृव्यस्य स्नानस्य अनन्तरं मम स्नानम् । | It would be my turn after uncle's. |
| पि - का त्वरा भवत्याः ? | Why you are in a hurry ? |
| पु - सपादनववादने मम विशेषकक्ष्या अस्ति । | I have a special class at nine fifteen. |
| पि - शीघ्रं स्नात्वा उपाहारं समाप्य श्रीधरगृहं गत्वा ततः कार्यालयः गन्तव्यः इति मम सङ्कल्पः आसीत् । प्रायः अद्य श्रीधरस्य गृहं प्रति गमनं न शक्यते इति भाति । | I wanted to have my bath and breakfast early, go to Shridhar's house and then go to the office. But it looks as if I wouldn't be able to go to Shridhar's house. |
| पु - पश्यतु, मन्दारस्य स्नानं समाप्तम् एव ।, पितृव्यः अहं च शीघ्रं स्नानं समापयावः । भवतः विलम्बः न भविष्यति । | See, Mandara has finished. Uncle and I will also finish soon. So, it willn't be late for you. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकाम् अगस्ट् - ९४ मासे प्रकटयिष्यामः ।



Shanbagavalli



Sundaramurthy

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून् - २० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः ।
• अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II पट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

**प्रथमचित्रम् - सफलं गतजीवनम् अनुस्मरतः वृद्धस्य फुल्लः हासः ।**

**द्वितीयचित्रम् - शबलं भाविजीवनम् अनुचिन्तयन्त्याः तरुण्याः बहुधा चिन्ता ।**

प्रेषकः - श्री के. शिवप्रसादः, नावेल् आर्टिफिट्, मजगोण् डोक्स् लि, मुम्बयी - ४०० ०१०


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८.००
विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -
डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गवैकल्यम् - Physical handicap
अतिरसखाद्यम् - A sweetmeat item
अपूपः - A fried snack item
अल्पज्ञः - One who knows very little
अवगतम् - Understood
अवधानम् - Attention
अशान्तिः - Restlessness
आम्रवृक्षः - Mango tree
उन्मत्तः - Mad man
उष्णीषम् - Turban
करण्डकः - Box
कार्यक्षमता - Executive ability
कूटयुद्धम् - Guerilla war
गर्तः - Pit
गोपालकः - Cowherd
घनारण्यम् - Thick forest
दलम् - Petal
दायभागः - Share of inheritance
निरूपकः - Performer
पञ्जिका - Torch
पराकाष्ठा - The tip
परिसरः - Environment
पर्णम् - Leaf
पाञ्चालिका - Doll
पिटकः - Swelling
प्रभुत्वम् - Mastery
निवर्तिष्यते - A future happening
प्राणप्रियः - As dear as life
युतकम् - Shirt
रथयात्रा - Car festival
रोम - The hair on the body
वित्तकोषः - Bank
विधूननम् - Shaking
विवृतवान् - Explained
वैशाल्यम् - Vastness
स्यालः - Wife's brother
श्रान्तिः - Fatigue
सारांशः - Gist
सिकताः - Sand
स्थगनम् - To stop

